८०८

# नेपालसाम्राज्योदयम्

[ महाकाव्यम् ]



प्रणेता

पण्डितपशुपतिझाः

## सम्मति

पण्डित श्री पशुपति झा द्वारा लिखित "नेपाल साम्राज्योदयम्" वस्तुतः अभिनन्दनीय काव्य है। आशा है यह काव्य-ग्रन्थ दोनों देशों के बीच सौहार्दमय सांस्कृतिक सम्बन्ध स्थापित करने में पूर्ण योगदान प्रदान करेगा।......

...इसकी शैली की प्राञ्जलता ने मुझे अत्यन्त प्रभावित किया है। आशा है विद्वज्जन इस अभिनव काव्य ग्रन्थ का स्वागत करेंगे।

**रामकरण शर्मा**
उप-शिक्षा सलाहकार संस्कृत
शिक्षा तथा समाज कल्याण
मन्त्रालय (शिक्षा-विभाग)
भारत सरकार

* * *

# नेपालसाम्राज्योदयम्

[ महाकाव्यम् ]



रचयिता

**पण्डितपशुपतिझाः**

नव्यव्याकरण-साहित्याचार्यः

प्राध्यापकः

विश्वेश्वरानन्द-विश्वबन्धु-संस्थानम्

पञ्जाबविश्वविद्यालयः, होशियारपुरम्

प्रकाशिका : श्रीमती सीतादेवी
द्वारा : पण्डि० पशुपतिझा
विश्वेश्वरानन्द-विश्वबन्धु-संस्थान,
पञ्जाब-विश्वविद्यालय,
पो० साधुआश्रम, होशियारपुर—१४६०२१



विजयादशमी, संवत् २०३७
सन् १९८० ई०

मूल्य : ४० रुपए मात्र

मुद्रक :
देवदत्त शास्त्री विद्याभास्कर
विश्वेश्वरानन्द वैदिक शोध-संस्थान प्रेस,
साधु आश्रम, होशियारपुर
(पंजाब)

यत्राभूवन् प्रथितयशसो योगिवर्या यतीन्द्राः
सिद्धात्मानः सदय-हृदयाः रामपादाब्ज-भृङ्गाः।
तत्रासीनो मुदितवदनो देवभाषानुरागी
गोविन्दाख्यो विलसतितरां साम्प्रतं वैष्णवोऽयम् ॥



श्री भगवान् नारायण द्वारा स्थापित सिद्धपीठ पीण्डोरी
धाम के वर्तमान ११०८ तपोमूर्तिवैष्णवाचार्य
महन्त गोविन्ददास शास्त्री जी महाराज
जि० गुरदासपुर (पंजाब)

# समर्पणम्

तव कर-कमलस्थां स्फाटिकीमक्षमालां
नख-किरण-विभिन्नां दाडिमी-बीज-बुद्ध्या ।
प्रतिपलमनुकर्षन् येन कीरो निषिद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥

नीहार-हार-घनसार-सुधाकराभां
सौदामनी-कनक-चम्पक-दाम-भूषाम् ।
ज्ञानप्रदां भगवतीं कमलासनस्थां
त्वामाश्रयेऽनवरतं मनसा विभूत्यै ॥

काव्यपुष्पमिदं देवि ! शारदे वल्लकीधरे
भक्त्याऽर्पयति ते मातः शरदिन्दुनिभानने ! ॥

—पशुपतिझाः

# ग्रन्थकर्तुः परिचयः

आसीदिन्द्रपतिर्बुधो दरिहरेर्वंशाम्बुजाहस्करो
यद्वैदुष्यमवेक्ष्य भूपतिमणिर्नेपालपालो नृपः।
सढाँख्यालसितं मनोरमपुरं प्रादात्प्रमोदान्वितः
यत्रागत्य निजान्ववायसहितश्चक्रे स वासं मुदा ॥ १ ॥

तत्पुत्रः करुणालयो बुधवरो विद्वज्जनैर्मानितः
श्रीमान् स्पर्शमणिः प्रमाणनिपुणो निष्कैतवो धार्मिकः।
तस्माल्लब्धजनिर्मनोहर-सुधीः शब्दज्ञपञ्चाननः
पाण्डित्येन निजेन तत्र विषये ख्यातिं जगाम द्रुतम् ॥ २ ॥

तज्जातेषु सुतेषु पञ्चसु लघू रामादिदेवप्रियः
कृष्णानन्द-बुधः परोपकरणे नक्तन्दिवं तत्परः।
जातास्तस्य सुतास्त्रयः सुमतयस्तन्मध्यमोऽहं सुतः
श्री-दुर्गाचरणाम्बुजार्चनरतिः सत्सेवको धीमताम् ॥ ३ ॥

बाल्येऽपाठि जनैः सुगीतयशसः श्रीविष्णुदेवाद् गृहे
तारुण्यं जनकाधिराजनगरे श्री-जीवनाथान्तिके।
नीतं साधुतया ततः शिवपुरीमासाद्य वाराणसीं
शास्त्रं व्याकरणं गुरोरधिगतं श्री-बालबोधान्मया ॥ ४ ॥

साँढाख्ये निजपत्तने प्रवयसा संस्थापिते देवगी-
र्विद्यासद्मनि शब्दशास्त्रजलधिः श्रीकार्तिकेयः सुधीः।
स्थित्वाऽन्तेवसतां चयं सुमनसा सम्यवतयाऽध्यापयन्
षड् वर्षाणि ममाप्यबोधतिमिरं जह्रे चिदंशत्विषा ॥ ५ ॥

गार्हस्थ्यं समुपाश्रयन्नतिमृदुर्वाचस्पतिर्मेऽग्रजः
क्लेशं नैकविधं सदाऽविगणयन्नुत्साहमावर्द्धयन्।
द्रव्यैः सद्वचनैश्च पाठनविधौ योऽरञ्जयन्मानसं
तस्यर्णान्न कथं चिदाजनि भवेन्मुवितश्चिरादागतात् ॥ ६ ॥

# सम्मतिः

नव्यव्याकरण-साहित्याचार्यस्य प्राध्यापक—श्रीपशुपतिझा-कविवर्यस्य नवनिर्मितं "नेपालसाम्राज्योदयम्" नामकं महाकाव्यं विलोक्यानुवाच्य तद्गत - विषय - वर्णन-सौष्ठव-साहित्य-स्वारस्य-रसमाधुर्यादि निपीय च ममान्तरङ्गमतितरां मुदितमभूत्। संस्कृत-महाकाव्यानां परम्परातीवप्राचीनकालात् प्रवर्तमाना विद्यते। सा च साम्प्रतमपि सुरसरस्वतीसमुपासकैरक्षुण्णतया संरक्ष्यते नव-नवोन्मेषमिश्रिता च सामग्री प्रस्तूयत इति ज्ञात्वा कस्य सचेतसो हृदयमानन्दामृतपयोधौ निमग्नं न भवेत्?

होशियारपुरस्य श्रीविश्वेश्वरानन्दसंस्थाने (पंचाम्बुविश्व-विद्यालय-संचालिते) साध्वाश्रमे शास्त्रसेवारतैः श्रीझामहोदयैः अस्मिन् महाकाव्ये नेपालभुवो महिमवर्णनेन सह तत्रत्यानां राज्ञां विद्वत्प्रवराणां प्रारम्भकालादितिवृत्तमनुसृत्य परिचयोऽपि प्रदत्तः। महाकाव्य-लक्षणानां सम्यङ् निर्वहणेन, क्वचित् प्रकृतिवर्णनेन, क्वापि युद्धवर्णनेन, कुत्रचित् राज्ञां वैभवनिदर्शनेन, पर्वतानां, नदीनां, तपसां विभिन्नक्रियाकलापानां च प्रस्तुतीकरणेन महाकाव्यमिदमतीव रमणीयं स्पृहणीयं च सम्पन्नमित्येतदर्थं महाकविवराय श्रीपशुपतिझा-महोदयाय भूयसो धन्यवादान् समर्पयामि संस्कृतसाहित्यरसिकांश्चावेदयामितमां कृतेरस्याः स्वारस्यपानायेति शम्।

—डा० मण्डन मिश्रः

(प्राचार्यः)

नवदेहलीस्थ-श्रीलालबहादुरशास्त्रिकेन्द्रीय-संस्कृतविद्यापीठस्य।

दिनाङ्क २-१०-१९८०

# प्रास्ताविकम्

लौकिकसंस्कृतसाहित्ये महाकाव्यानां परम्परा महर्षिवाल्मीकिविरचितादादिकाव्याद् रामायणात्प्रभृति वर्तमानं युगं यावदनवच्छिन्नरूपेण प्रवर्तते। तत्र कालिदासाश्वघोषभारविभट्टिकुमारदासमाघरत्नाकरादयः कवयः प्राचीनयुगालङ्कारभूताः साहित्यजगति प्रथन्ते। मध्ययुगे चापि श्रीहर्षादयः कवयः परम्परामिमां प्रचारयामासुः, यद्यपि युगेऽस्मिन् विरचितेषु महाकाव्येषु कथावस्तुचरित्रचित्रण-रसाभिव्यक्तिभाषाशैल्यादिदृशा न तावती परिपक्वता परिलक्ष्यते यावती प्राक्तने युगे निर्मितेषु महाकाव्येषु संलक्ष्यते। अलङ्कार-नियोजनं प्रत्याग्रहविशेषो वैदुष्यप्रकाशनरुचिश्चास्मिन् युगे संजातानां कवीनां काव्यानि रसभावादिनिरपेक्षाणि समापादयतामिति समीक्षकाणां विचारः समीचीन एवाभाति। आधुनिकं युगं महाकाव्यानां विकासस्येतिहासे प्राचीनमध्ययुगाभ्यां तुलितं सत्कतिपयवैशिष्ट्यहेतोर्विशिष्टं स्थानं भजते। वर्तमानेऽस्मि युगे विषयवस्तुनो नवत्वं, वैज्ञानिकी दृष्टिर्विविधसंस्कृतिसंकरप्रभावश्च साहित्यजगति विचरतां कवीनां कृतीर्विशेषेणानुगृह्णन्ति।

उपयोगितावादिन्याधुनिके युगे संस्कृतकाव्यलोके विचरन्तः कवयो लेखकाश्च विरला एव, तत्रापि च प्रतिभया स्वकीयया सहृदयमनांसि चमत्कुर्वन्तो रससिद्धाः कवयस्तु विरलतरा एवेति चेखिद्यते चेतः। संस्कृतजगति काव्यसाधनायाः पन्था अद्य बहुविघ्न इत्येवाद्य दैव्याऽनया वाचा विरचितानां रसवतां काव्यानां वैरल्ये हेतुः।

आधुनिकसंस्कृतकाव्यविकासेतिहासस्येयं पृष्ठभूमिः प्रस्तुतस्य प्राध्यापकश्रीपशुपतिझामहाभागविरचितस्य नेपालसाम्राज्योदयाख्यस्य महाकाव्यस्य महत्त्वं विशेषेणातनोति। पञ्चदशसर्गात्मकेऽस्मिन् महाकाव्ये भारतराष्ट्रप्रतिवेशिनो हिमालयाङ्कनिविष्टस्य नेपालदेशस्य साम्राज्योदयो यथायथं वर्णितः। अत्र हि पुरातनकालादारभ्य वर्तमानं कालं (१९७९-तमं खिृष्टाब्दं) यावन्नेपालराज्यस्येतिवृत्तं

परम्पराप्राप्तानि तत्स्रोतांस्याधारीकृत्य क्वचित्संक्षेपेण क्वचिच्च सविस्तरं विवृतम् । महाराजाधिराजश्रीमहेन्द्रस्य शासनकालस्तत्सूनोश्च महाराजाधिराजश्रीवीरेन्द्रस्य प्रवर्तमानो राज्यकालः कविना विशदं प्रस्तुतौ ।

महाकाव्यमिदं सगुणालङ्कारं सरसं च वरीवर्तीति स्थालीपुलाकन्यायेन क्वचित् क्वचिदस्य पर्यालोडनं कृतवतो मे विचारः । महाकाव्यस्यास्य प्रणेता नेपालसाम्राज्यं, महाराजाधिराजश्रीवीरेन्द्रं, तदीयां च शासनपद्धतिं प्रति विशेषेणास्थावानिति काव्ये तत्र तत्र प्रकटितेन तदीयेनाभिमतेन स्फुटीभवति । कविः शासनपद्धतिमत्र देशे प्रचलितां जनतन्त्रपद्धतिमाह (तु० १५.९४) । अनेन साम्राज्यमिदं प्रति तदीय आस्थाविशेषो विशेषेणास्माकं दृष्टिपथमायाति । राज्ञां प्रकृतिरञ्जनरूप आदर्शः सर्वथा कविसम्मत इति राजतन्त्रपद्धतिं प्रत्यास्थां वितन्वतोऽस्य काव्यस्य दोषः कियत्याऽपि मात्रयाऽपकृष्यते । कविकृतं राज्ञः श्रीद्रव्यशाहस्य वर्णनमिदं विश्वादर्शभूतस्य लोकपालस्योज्ज्वलं रूपं समुपस्थापयति—

न्यायेन धैर्येण बलेन बुद्ध्या शौर्येण धर्मेण च साधुवृत्तिः ।
लोकान् समस्ताननुरञ्जयन्स यशो वितेने भुवि सर्वदिक्षु ।। (३.२५)

लोकसंग्रहं चिकीर्षतो राज्ञ आदर्शोऽत्र स्फुटमभिव्यक्तः—

कदापि हेयो न सतां सुसंगमः सदानुगम्यः कुलधर्म आत्मना ।
जनेषु पुत्रेष्विव साधुभावना प्रदर्शनीयाऽवनिपैर्महत्तमैः ।। (७.२६)

इदमपि पद्यमनया दृष्ट्या महत्त्वमाधत्ते—

राजन्यैरभिनन्दितो मतिमतां वृन्दैः सदा मण्डितो
लोकानामनुरञ्जने दृढमतिः कारुण्यरत्नाकरः ।
वाचा कोमलया सुधामधुरया संबोधयन् स्वां प्रजां
नेपालाभिजनेश्वरो विजयते वीरेन्द्रभूपो भुवि ।। (१५.७४)

काव्यशोभाकरा धर्मा गुणालङ्कारादयोऽपि यथास्थानं विराजन्तेऽत्र महाकाव्ये । रूपकालङ्कारस्योदाहरणमिदं विशेषेण हृद्यमित्यधो दीयते—

प्रत्यर्थिमातङ्गकदम्बसिंहो विद्वन्मनोमानसराजहंसः ।
हंसः प्रजासन्ततिसारसानां रणाजिरे सैन्यचकोरचन्द्रः ।। (४.११)

कालिदासदण्डिश्रीहर्षादिकविकृतिषु प्राचुर्येण परिलक्ष्यमाणं नैसर्गिकं पदलालित्यमत्र काव्ये पदे पदे दृष्टिगोचरीभवति । तथा हि निदर्शनानि कानिचिद् उद्ध्रियन्ते—

(क) स तस्थिवांसं पुरतः परेशं वृषाधिरूढं सहितं भवान्या ।
तपोमयं भूतिविभूषिताङ्गं भुजङ्गभूषं गिरिशं ददर्श ।। (२.२१)

(ख) पुरः स्थितं भस्मविभूषिताङ्गं तपस्विनं वीक्ष्य धराधिनाथः ।
प्रसन्नचेताः प्रणताङ्गयष्टिः पादौ तदीयौ शिरसाससाद ।।
(२.३८)

(ग) गतवति नरनाथे दिव्यलोकं विशोकं
पतिविरहकृशानुप्रज्वलत्क्षीणकाया ।
नयनयुगलनिर्यद्वारिधारानिषिक्ता
सह नृपतिचिताभिः सत्यभूद्राजपत्नी ।। (७.४८)

कवेर्वर्णनचातुर्यमपि विशेषेण मनो मोदयति । तद्वर्णितेषु प्रकृतिरूपेषु वसन्तस्य वर्णनमिदं सविशेषमुल्लेखनीयं वर्तते—

महीरुहेष्वङ्कुरयन्दलानि पङ्केरुहाणि स्फुटयन् समन्तात् ।
संचारयन् कामिषु कामभावं वियोगिनां हृन्वि विदूयमानः ।।
रसालवृक्षैः सह माधवीनां योगं समन्ताद्रचयन् पृथिव्याम् ।
विमोचयन् चञ्चुपुटं पिकीनां सुगुञ्जयन् चञ्चलचञ्चरीकान् ।।
सम्पादयन् चेतनतां जडेऽपि समाधिभाजां हृदयं विकुर्वन् ।
कालो वसन्तः शिशिरान्तकारी सद्यः सिषेवे गुणिराजमेनम् ।।
(३.३-५)

इत्थं सरसं सालङ्कारं च काव्यमिदं सर्वथा सहृदयानां कण्ठविभूषणं स्यादिति, कविश्च श्रीपशुपतिराधुनिकसंस्कृतसाहित्यजगति लब्धकीर्तिरभीष्टवस्तुगुम्फितकाव्यमणिमालाविरचनसमासादितपरनिर्वृतिश्च भूयादिति भगवन्तं भूतभावनं प्रार्थयते ।

—धर्मेन्द्रकुमारगुप्तः
पंजाबराज्यान्तःपातिपटियालास्थपंजाबीविश्वविद्यालये संस्कृतपालिविभागस्याचार्योऽध्यक्षश्च

ख्रि० १०-१०-१९८०

# शुभाशंसा

अथ विद्वद्वरपशुपतिसुकविसन्दृब्धं नेपालसाम्राज्योदयं नामाऽभिनवं महाकाव्यमिदमधिकृत्य किमपि प्रस्तूयते ।

देवनद्या इव परमपावन्या देववाण्या निष्यन्दधारा नानाप्रत्यूहगण्डशैलाहतप्रतिहताऽपि दिव्यतयाऽमरतामिव निजां सडिण्डिमघोषं घोषयन्ती सततमव्याहतं प्रवहन्त्यद्यापि संलक्ष्यते । स्वयं मुमूर्षुष्विव वैदेशिकभाषा वारुणीपरिपानभसितीकृतौजस्सु केषुचिदमरभारतीरतिविधुरेषु मृतामिमां सप्रौढिवादं वदत्सु अपि विकरालकालव्यालगरलदूषिते प्रतिकूलेऽपि विरलसंस्कृतप्रचारे कालेऽस्मिन्नन्वहं भूयांसः सुरस-सरस्वती-सारसरसरसनाः कविजनाः सुतरां सरसाः काव्यकृतीः साभिनिवेशं प्रणयन्ति यथाकथञ्चित् प्रकाशञ्चानयन्त्येवेत्यहो ! तेषां सुरगिरि भक्तिः अमन्दमानन्दनिष्यन्दमुद्गिरन्तीषु तासु रचनासु प्रस्तुता कमपि विशेषमात्मन्याश्रयतीति सा सर्वथाऽभिनन्दनीया भवति ।

अस्यां किल सुकविनाऽमुना नेपालभूभागस्य सौभाग्यं, भौगोलिकी सीमा, तदन्तर्वर्तिनां महाशैलानां परिचयस्तेषामुच्छ्रायमानं, तदन्तर्गताः प्रदेशास्तत्स्वरूपं चेत्येतत्सकलमप्यविकलं विस्तरतो वर्णितम् । कविरयं स्वयं नेपालाभिजन इति न चित्रं यदि तत्रत्याधित्यकोपत्यकासमतलप्रदेशांस्तत्तत्स्थलवर्तितीर्थसरःसरिदरण्यानीपुटभेदनादीनि च यथायथं समुपवर्ण्य तद्वासिजनतागुणदोषप्रकाशनं निष्पक्षमनुतिष्ठति । प्रथमसर्गे नेपालदेशस्य भौगोलिकः परिचयः सांस्कृतिक-दृष्ट्या नियतं महिमभरितः । अत आद्योऽयं सर्गो विषयप्रवेशात्मकः ।

द्वितीयसर्गस्यारम्भो भारतवर्णनेन तदन्तश्च राजपुत्रदेशगतमेवाड़-प्रदेशकीर्तनेन कथावस्तूपक्रमेण कृतः । कश्चिद् राजपुत्रदेशीयो नृपोऽननुकूलदैववशाद् राज्यभ्रष्टो नेपालराज्यं तरसा विजित्य तत्र स्व-साम्राज्यं प्रातिष्ठिपदिति वृत्तमैतिह्यसमर्थितम् अत्रापि च

कविवरेण तथैव समुपन्यस्तम्। तत आरभ्य यथाक्रमं विविधवंश-प्रसूतानां भूपतीनामुत्थानपतनोदन्ता यथालेखमुपवर्ण्यमानाः सातत्येन मिथः सम्वद्धा इतिहाससुरसिकानां नाऽस्वारस्यावहाः स्युरिति दृढं प्रत्येमि।

क्रमशश्च मिथः कलहजराजर्जरिते राजकुले गौराङ्गकूटनय-प्रयुक्तभेदनीत्या शिथिलानुभावे शासने राणावंशप्रसूतमन्त्रिप्रधाना-ऽपहस्तिते सकलाधिकारे, नेपाल-भूपालानामकिञ्चित्करत्वं तद्-दुष्परिणतिः, भारत-स्वातन्त्र्यमनु तदानींतनस्य नृपालस्य त्रिभुवनशाहस्य मृगयाऽपदेशेन राजभवनान्निर्गत्य भारतराजदूता-वासे शरणग्रहणं, ततश्च सकलेऽपि नेपालभूतले स्वातन्त्र्यान्दोलनं राणावंशप्रभावस्यान्तः, क्षितिपतिना लोकहिताय प्रवर्तितानि भूयांसि प्रगतिकार्याणि, तदुत्तरं महेन्द्रनृपतेस्तदन्ते च वर्तमाननरदेवस्य वीरेन्द्रशाहस्य शासनं, तत्काले च नेपाले जायमानानि राजनयिक-सूद्धारकर्माणि स्वसमकालपातीनि कविना यथावृत्तं वर्णितानीति न तद्याथार्थ्यविषय उदीयात् कस्यापि प्रेक्षावतः सन्देहदोलादोलावसर इति मे विस्रम्भः।

संस्कृत-साहित्ये काममैतिहासिककाव्यानां नामोद्देशायाऽस्ति दीर्घा संख्या परं तत्र वृत्तानामल्पीयस्येव मात्रा तथ्याश्रिताऽन्यथा कल्पनायाश्चमत्कार एव सर्वं कथानकमुपप्लवत इति न तानि समीक्ष-काणां मत ऐतिहासिक-विशेषणमर्हन्ति। विशेषतः पाश्चात्या-स्तादृशेषु काव्यवन्धेषु वर्णितं कालक्रमं वर्ण्यपात्रजीवनवृत्तानि तच्चरितानि च यथाकालं यथाक्रमं यथातथ्यं च स-वत्सर-निर्देशं चर्चितान्यपेक्षन्त इत्यहो! तेषामपेक्षा। परमत्र काव्ये न तादृशः कालविरोधः क्वचन दृश्यते। घटनासमयसङ्केतश्च यत्र तत्र कविना यथायथं सावधानं विहित इति सर्वो गुणो नियतं तेषां तोषावहः स्यात्।

काव्यमिदं क्वचन तु पठ्यमानं कल्हण-कृतराजतरङ्गिण्यां प्रसङ्गं स्मारयति। अत्रापि हि राजवंशावल्या वर्णनं तया सदृशमेव। अन्तरम् इयदेव यत् कल्हणो भाविन्या विशिष्टघटनायाः पूर्वं स्वटिप्पण्या व्यञ्जनमाचरति नाऽत्र तथा। यथा च राजतरङ्गिण्यां राज्ञी दिद्दा नितरां रक्तपिपासुर्वर्णिता तथैव काव्येऽत्र राज्ञ्य-

लक्ष्मीर्नितरां दुश्चरित्रा हिंस्रा च चित्रिता । राजेन्द्रशाहस्य चरित्रमपि कल्हणचर्चितानन्तनृपस्येव लक्ष्यते । दशम एकादशे च सर्गे नेपालस्य काश्मीरकनृपहर्षदेव-जयसिंहशासने काश्मीरस्ये-वेति प्रचुरं साम्यं तयोः । परं नाऽत्र तत्रेव किमप्यनुश्रुतिमात्रमूलं विसङ्गति-करं वृत्तं प्रस्तुतं कविनेति काव्यस्यास्य महान् विशेषः ।

कल्हणस्य राजतरङ्गिणी शान्तरसप्रधाना गाम्भीर्यं धत्ते, काव्यमिदं तु वीररसप्रधानमपि समासादिकृतजटिलता-विरहितं सुतरां सरसम् । कवेरस्य भारती भागीरथीव सततप्रसन्नाऽबाध-प्रवाहा कथागुणैरावर्जयति नितरां सहृदयहृदयानि । चतुर्थे सर्गे पुत्रमृत्युमुद्दिश्य पृथ्वीपतिना कृतोऽष्टमे सर्गे च स्वपत्नीनिधनमनु राज्ञो रणबहादुरस्य च विलापः करुणरसस्य साधीयसीं तरङ्गिणीं तरङ्गयतः । पृथ्वीनारायणस्य सिंहेन सह नियुद्धं चाद्भुतावहम् ।

काव्येऽत्र यथाविषयं निबद्धानि अनुष्टुबुपजातिवंशस्थ-वियोगिनीसदृशानि लघूनि च्छन्दांसि प्राधान्यं भजन्ति न हृदयं रुजन्ति । सर्गान्ते च मालिनी-वसन्ततिलका-शार्दूलविक्रीडित-प्रभृतीनि प्रलम्बच्छन्दांसि काव्यरूढिमनुवर्तमानेन यत्र तत्र प्रयुक्तानि परं प्रसादसाधिततया न तान्युद्वेजकानि । उपमादयोऽलङ्काराश्चा-ऽपृथङ्निर्वर्त्यतया चारिमाणं वर्धयन्तः सत्यमेवालङ्कारतां प्रमाण-यन्ति । यत्र तत्र जायु-पृदाकुसदृक्षान् सर्वथाऽप्रयुक्तप्रायान् शब्दान् प्रयुञ्जानेन कविना स्वकीयकोषज्ञानसमृद्धिरपि समर्थितेति वक्तव्य-मेव भवति । भावात्मकानां प्रसङ्गानां न भूयसी सृष्टिरत्रेति कथा-वस्तु सप्रवाहं सर्वथा रुचिकरम् । प्राकृतिक-सुषमावर्णने शृङ्गार-करुणयोर्विधाने माधुर्यं संग्रामराजनयिकाभिसन्धिप्रसङ्गेषु चौजोगुणः सुपरिपाकं भजतः ।

प्रजातन्त्रस्य युगेऽस्मिन् राजतन्त्रस्य शृङ्खला सकलेऽपि भूतले छिन्नप्रायाः । कतिषुचन देशेषु कामं तस्याः सत्त्वमद्यापि श्रूयते परं परिवर्तितायां स्थितावेव । जनतन्त्रस्थापनाया अर्थना येन केनापि प्रकारेण तत्रापि भवत्येव । नेपालदेशः खलु न तस्यापवादः । परं राजतन्त्रं जनकल्याणाभिनिवेशि सत् न तथारुन्तुदं भवति यथा निरंकुशम् इति भावनया कविरयं नेपालदेशे नृपशासनेऽपि प्रत्यहं लोकहिताय विधीयमानानां प्रयासानां विकासकार्याणाञ्च जनतन्त्रो-

न्मुखत्वेनाऽभिवृद्धि समीहमानः सोल्लासमुद्गायति तदीयानुच्चावचान् विशेषान् । वर्तमानमहाराजस्य वीरेन्द्रशाहस्य प्रशस्तिमुखेन सर्वतोमुखीं तदीयां प्रगतिमेव सोऽत्र बहुधा आशास्ते । राजनयिक-दृष्टया च परितः परिपन्थिराष्ट्रपरिवेष्टितस्य भारतस्य विश्व-स्मिन्नेकमात्रावशेषेण हिन्दूराष्ट्रेण प्रत्यासन्नतमेन संस्कृत्याऽभिन्नेन पारस्परिकहितानि चाऽनुरुध्यानुकूलतयाऽपेक्षितेन नेपालदेशेनोत्तरो-त्तरं मैत्री-सहयोगादि सम्बन्धानां वृद्धि दार्ढ्यं च कामयमानः सुकविरयं तस्यां दिशि स्वर्णमयं भविष्यमन्तर्दृशा पश्यतीति काव्यमिदं राष्ट्रहितभावनयाऽऽकलितमिति नाऽस्ति मे संशीतिलेशः ।

एवंविधगुणगणगरिमनिर्भरं नेपालसाम्राज्योदयाभिधमैति-हासिकं महाकाव्यमिदं लेखिष्यमाणभाविमहाकाव्यप्रणेतॄणां मार्ग-प्रदर्शनमनुतिष्ठत् सुरभारतीसमुपासकानां विदुषां समाजेऽनुरूपमादरं प्रचारं प्रसारं च लभमानं कविवरं पशुपतिझामहाभागमितरानेक-सुकृतिप्रणयनैरमरवाण्या भाण्डागारस्य सातत्येन समर्धनाय प्रदीपये-दिति सबहुमानमाशास्ते ।

—शिवप्रसादो भारद्वाजः

पञ्चनन्दविश्वविद्यालयीय-विश्वेश्वरानन्द-

दिनाङ्कः १६-१०-१९८०

विश्वबन्धु-भारत-भारती-शोध-संस्थानस्य

स्नातकोत्तर-शिक्षणविभागे प्राध्यापकः ।

# प्राक्कथनम्

अयि भोः संस्कृत-साहित्य-रसिका विद्वांसः !

अद्य नेपालस्येतिवृत्तमधिकृत्य कृतं नेपालसाम्राज्योदयं नाम महाकाव्यं संस्कृत-साहित्य-सुधाऽऽस्वादन-सरसचेतसां सचेतसां किमवधि तन्मनांस्यनुरञ्जयतीति तैरेव निर्णेतव्यम् ।

अधिनागपुरं संस्कृत-महाविद्यालये सन्तिष्ठमानस्य केनाप्यन्तः-स्थितेन सम्प्रेरितस्य मम मनस्यकस्मान्नेपालानुवन्धिमहाकाव्य-प्रणयन-सम्वन्धिसङ्कल्पः समुद्गतोऽपि विघ्नवाहुल्यान्न तदानीं पूर्णतामाञ्चदिति सततमचेखिद्यतैव चेतः । इदानीं भगवतो भूतभावन-भवानीपतेरसीमानुकम्पया निर्विघ्नसफलमनोरथोऽहं नितरामासाद-यामि प्रसादम् ।

काव्यस्यास्य प्रारम्भिककाले मम समक्षे सत्स्वप्यनेकविषयेषु नेपालसम्वन्धिविषयमेव प्राथम्येनाभ्युपागमं काव्यनिर्माणाय । जान-न्त्येव हि सर्वे यज्जन्मस्थानं केषां न प्रियम् ? तद्देशीयत्वात्तत्रत्य-यशोगुणगानं स्वीयकर्तव्यमिति मत्वा तत्सम्वन्धिकाव्यनिर्मितये प्रावर्तिषि ।

नेपालसीमानं स्पृशत्सु तिब्बताद्यनेकप्रतिवेशिदेशेषु सत्स्वपि नेपालभारतयोर्निरन्तरागतो यादृशः सम्वन्धो द्रष्टुमायाति न तथाऽन्येषाम् । नेपालो न भारतस्य प्रतिवेशिदेश एव, अपि तु भारतवन्दितस्योत्तुङ्गशिखरहिमालयस्य महत्त्वपूर्णमङ्गमपि संलक्ष्यते । देशद्वयं राजनैतिकदृशाऽन्योन्यं भिन्नमपि भौगोलिक-सांस्कृतिकधार्मिक-दृष्ट्या समानत्वमेवाकलयति । देशद्वयस्यार्थिकी प्रगतिरपीदानीन्तने युगेऽन्योन्याश्रितेत्यपि नाविदितं केषामपि राजनीतिविशेषविदाम् । यद्यपि विश्वस्मिन् स्थिता महीयांसो लघीयांसो वा यावन्तो देशाः सन्ति ते मानवतया प्रत्येकं देशैः सह स्वीयसहानुभूतिं प्रदर्शयन्त्येव तथापि सर्वविधसाम्याद् भारतस्य नेपालेन सह सहानुभूतिरन्यदेशानपेक्ष्य किञ्चिद् भिन्नैव परिलक्षिता

भवति । किं बहुना नेपालस्य वर्तमानशासकस्य पूर्वजोऽपि भारतान्तर्गतराजस्थानप्रदेशादेव समागत्य तत्रत्यप्राचीनपरम्परागतराज्यप्रक्रियां निर्वहतोऽनुभावशालिनो भूपान् महता पराक्रमेण विजित्य विविधभागेषु विभक्तानि लघूनि राज्यानि सम्यक्तयैकसूत्रे समावद्धच शासनमकार्षीत् । तद्दिनादेवायं देशः सर्वतन्त्रस्वतन्त्रः प्रभुत्वसम्पन्नश्च विश्वविश्रुतोऽभवत् । विश्वस्मिन्नेकोऽयमेवादर्शरूपो देशो यश्चाद्यापि कस्यापि पराधीनत्वं नाभ्युपागमत् न च परम्परागतं सनातनधर्मं हिन्दुत्वं चाहासीत् इति महद् वैशिष्ट्यम् ।

संस्कृत-साहित्ये जगति विविधान्यैतिहासिक-काव्यानि दृष्टिपथे समायान्ति । तत्र तत्र काव्येषु वर्णिता घटना कल्पनाप्रसूतेव प्रायशः प्रतीयते इति पाश्चात्यविदुषां मतम् । काव्येऽस्मिन् प्रदर्शितासु घटनासु नैकाप्यसत्यं स्पृशति । सामयिकघटनायाः कालतिथ्यादीनां च यथास्थानं प्रामाणिकेतिवृत्तग्रन्थादाकृष्य समावेशेन काव्यमिदं किमपि नूतनत्वमादधानं समुदैदिति दृढं प्रत्येमि ।

नेपालशासनं काव्यमिदं प्रकाशयत्विवतीच्छया गतवर्षे काष्ठमण्डपमहं सम्प्राप्तः । तत्र राजकीयप्रज्ञाप्रतिष्ठानस्य कुलपतिनोपकुलपतिना च प्रकाशनविषयकवार्तालापश्चिरमभूत् । अन्ते च बहुविमर्शानन्तरमपि वर्षेऽस्मिन्नार्थिकसङ्कटग्रस्तत्वान्नेयं संस्था कृतिमिमां प्रकाशयितुं समर्थेति निराशाजनकं समाधानं तयोर्निशम्य ततः प्रतिनिवृत्तो महाराजाधिराजं सम्प्राप्तुं प्रायतिषि । सोऽपि तदानीं समस्तदेशे सामूहिकजनान्दोलनज्वालाज्वलितमानसो नादिशत् सम्प्राप्तुम् । प्राचीनपरम्पराधीतशास्त्राणां प्रेक्षावतामार्थिकी स्थितिः कीदृशीदानीन्तने युगे इति नाप्रत्यक्षं केषामपि विदुषाम् । अथापि मम धर्मपत्नी सीतादेवी चि० सुपुत्रः श्रीविजयकान्तश्चेत्युभौ मातापुत्रौ मां हतोत्साहमवलोक्य प्रकाशनाय प्रायतिषाताम् । तस्यैवायं परिणामो यदद्य काव्यमिदं प्रकाशितं सत् विपश्चितां दृष्टिपथमायासीत् ।

अस्य प्रेरणास्रोतः कविताकामिनीविलासेन कविकुलकमलदिवाकरेण महाकविना कालिदासेन प्रणीतं रघुवंशमहाकाव्यमेव ।

नेपालेतिवृत्तविदा श्रीमता काशीप्रसादेन संकलितात् 'नेपाल की कहानी' इत्याख्यपुस्तकात् विषयवस्तु समादाय विरचितमिदं महाकाव्यमतः श्रीवास्तवमहोदयस्य लेखकोऽधमर्णः ।

प्रकाशनात्पूर्वं काव्यमिदं ममाभ्यर्थनां स्वीकुर्वता श्रीमता शब्दारण्यविहरणपरायणेन पण्डितप्रवर-श्रीव्रजनन्दनमिश्रमहाभागेन सूक्ष्मेक्षिकया दृशाऽऽमूलचूलं महता परिश्रमेण संवीक्ष्य स्थल-विशेषेषु मतिञ्च प्रदाय नितरामन्वकम्पि । अतोऽहं सानतोऽभिनन्द-यामि ।

अस्माभिर्यत्किमपि वक्तव्यमासीत् काव्यविषये तत्सर्वं सम्य-गालोच्य डा० शिवप्रसादभारद्वाजेन स्वीयशुभाशंसायां प्रतिपादयता नितरामहमन्वग्राहीति तत्प्रत्याभारप्रदर्शनं स्वकर्तव्यमवगच्छामि । डा० धर्मेन्द्रकुमारगुप्तमहानुभावेनापि मत्प्रार्थनामभ्युपगच्छताऽस्य काव्यस्य प्रस्तावनां विलिख्य शोभा परिवर्धितेत्यहं नाजन्म तं विस्मर्तुं शक्नोमि ।

डा० मण्डनमिश्रमहानुभावश्चाप्यतीवधन्यवादभाग् येन काव्ये स्वीयसम्मतिं प्रदाय नितरामन्वग्राहि ।

संस्थानीयः डा० दामोदरझाः अतीव धन्यवादभाजनम् येनास्य प्रूफसंशोधनं विदधता क्वचित् क्वचित् विमर्शमपि प्रदाय मम साहाय्यमनुष्ठितम् ।

अन्ते च सरस्वतीसमुपसकान् सनम्रं प्रार्थये—काव्येऽस्मिन् प्रमादवशात् कण्टकजन्यदोषाच्च यत्र कुत्रापि स्खलनं द्रष्टुमाया-च्चेत्तदा कृपया मां सूचयितुमनुग्रहीष्यन्ति येनाग्रिमसंस्करणे तन्मार्जनं सम्भवेद् इत्यलं पल्लवितेन ।

विजया दशमी
वि० सम्वत् २०३७

विदुषां विधेयः
पशुपतिझाः

# प्रथमः सर्गः

सर्वतन्त्र-स्वतन्त्रो यो नाना-गिरि-विभूषितः ।
अरण्यानी-समायुक्तः स्रवन्ती-निर्झरान्वितः ॥ १ ॥

सोऽयं नेपालदेशो नो वेदाचार-विचारकः ।
निधानं सर्वधर्माणां जयत्यस्मिन् महीतले ॥ २ ॥

पुरा तु बहवो भूपाः खण्डशोऽशासुरेनकम् ।
धार्मिकाः सत्यवक्तारः प्रजा-वर्ग-हितैषिणः ॥ ३ ॥

प्रकृत्याऽस्य विभागौ द्वौ सुरम्यौ प्राच्यकालतः ।
पर्वतीयस्तथा मध्यो देशः शिष्टजनान्वितः ॥ ४ ॥

उत्तरः पर्वत-प्राज्यो दक्षिणः समभूमिकः ।
उभावपि हि सम्भूय देशस्यास्य विधायकौ ॥ ५ ॥

आर्थिकं बलमेतस्य मध्यदेशेऽवलम्बितम् ।
सैन्यं च पर्वतोयेऽस्ति पूर्वतः परिकल्पितम् ॥ ६ ॥

पर्वतस्था जनाः सर्वे सत्यवाचो निकैतवाः ।
तद्भाषितानभिज्ञत्वान्न प्रशंसन्ति तान्नरः ॥ ७ ॥

तदभिज्ञा जनास्त्वेषां सारल्यं हार्दिकं महत् ।
परिलक्ष्य प्रशंसन्ति तद्गुणाहृत-चेतसः ॥ ८ ॥

यत्रत्या गिरिजा बालाः संसक्तपुरुषांसकाः ।
तेषां सुचिरसङ्गिन्यो भवन्त्यापद्गणेष्वपि ॥ ९ ॥

वनप्रान्तेषु ता नित्यमर्धनग्ना विनिश्छलाः ।
निर्विकाराः स्वकार्याणि कुर्वन्ति दृढनिश्चयाः ॥ १० ॥

तासु बह्व्यः कुमार्यस्तु प्रत्यहं पुरुषैः समम् ।
कुर्वत्योऽपीह कार्याणि नावगच्छन्ति विक्रियाम् ॥ ११ ॥

स्वीयैः सहचरैः सार्धं क्रीडन्ति विचरन्ति च ।
शेरते चापि मौग्ध्यात्ता विषयानीक्षिताशयाः ॥ १२ ॥

वयस्का एव कामिन्यो जानन्ति स्मर-विक्रियाम् ।
तथापि ता भवन्त्यार्यपथरक्षाव्रतश्रियः ॥ १३ ॥

पुरुषापेक्षया नार्योऽकलुषासक्तचेतसः ।
प्राप्यन्ते बहुधा तत्र रजोधर्मानुपालिकाः ॥ १४ ॥

वैधव्यमाप्ता नार्यस्तु प्रत्यहं देवपूजने ।
क्षपयन्त्यधिकं कालं धार्मिकं भावमाश्रिताः ॥ १५ ॥

बहवो ब्राह्मणास्तत्र वेदाभ्यसनतत्पराः ।
सूक्ष्मतत्त्वावगन्तारो रमन्ते ब्रह्मणि स्थिताः ॥ १६ ॥

अद्यापि बहवो लोकाः सत्कुर्वन्त्यतिथीन् गृहे ।
विना सत्कारमेतेषां न गृह्णन्ति पयोऽपि ते ॥ १७ ॥

पर्वतीयाः सदा धर्मभीरवोऽमलचेतसः ।
असत्पथे न पादौ स्वौ कदापि निदधत्यमी ॥ १८ ॥

अनेकासान्तु जातीनां समवायोऽत्र तिष्ठति ।
स नो गणयितुं शक्यो धान्य-भेद इवावनौ ॥ १९ ॥

देशेऽत्र दृश्यते का चित्परा नैसर्गिकीच्छटा ।
यां दृष्ट्वा के न नन्दन्ति तत्क्षणं वसुधाक्षितः ॥ २० ॥

एकतो जगतः सर्वोत्तुङ्गकूटो महीधरः ।
हारित्वं सर्वदा बिभ्रत् पूर्णः समतलोऽन्यतः ॥ २१ ॥

यत्रैकभागे शीतस्य महान् कोपोऽभिजायते ।
तदान्यस्मिन् महाचण्डतापैः सीदन्ति जीविनः ॥ २२ ॥

ऊषरा पार्वती भूमिरुर्वरा मध्यदेशगा।
एतत्प्रभाविताः सर्वे नेपालवसुधालयाः॥ २३॥

उभयोर्जातिरन्योन्यं भिन्नैव परिलक्ष्यते।
नेपालीत्यभिधानं तु न द्वयोर्बोधने क्षमम्॥ २४॥

उत्तरे तिब्बतप्रान्तात्प्राच्यां सिक्कमनीवृतः।
बङ्गोत्तरविहारेभ्यो दक्षिणेऽपाचि कूर्मतः॥ २५॥

एतस्याधुनिकी सीमा मिलिताऽस्ति परस्परम्।
यन्मध्ये संस्थिता लोका जीवनं यापयन्त्यमी॥ २६॥

देशकालविभागेन सीमा तु परिवर्तते।
नेयं सीमा पुरा काले देशस्यास्य विशेषतः॥ २७॥

चीनभारतयोर्मध्ये स्थितत्वादस्य नीवृतः।
महत्त्वात्यधिका जाता राजनैतिकदृष्टितः॥ २८॥

पूर्वसीमानमारभ्य पश्चिमान्तं महद्वनम्।
व्याप्तं सर्वत्र देशेऽस्मिन् शार्दूलादिसुशोभितम्॥ २९॥

गृहकार्योपयोगीनि काष्ठानि विविधानि च।
प्राप्यन्ते मनुजैरत्र विनाऽऽयासेन सर्वदा॥ ३०॥

पर्वतीयप्रदेशस्योत्तुङ्गता पृथिवीभृताम्।
पादानयुतमारभ्य[1] विधियुग्म-सहस्रकम्[2]॥ ३१॥

भागोऽयं प्रायशश्छन्नः प्रालेयैरतिशीतलैः।
मनुष्याणां सदाऽगम्यः सर्वसत्त्वविवर्जितः॥ ३२॥

हिमानीपिहितं सम्यक् सर्वोच्चशिखरं घनम्।
युग्मशून्याभ्रभाग्याक्षिपादमानव्यवस्थितम्[3]॥ ३३॥

---

१. १००० पदानि (Feet)।

२. २९००० पदानि।

३. २९००२ पदानि।

विभीषणाख्यो यः कूटो विश्रुतः पृथिवीतले।
सोऽप्यमुत्रैव विज्ञेयस्तेनसिंहो रुरोह यम्॥ ३४॥

तदन्ये कांचनः कुम्भकर्णो धौलागिरिस्तथा।
गोस्वामिनाथो लाम्टाङ्गो गौरीशंकर एव च॥ ३५॥

इमे कूटा महीध्राणां किंचिदूनास्तदुन्नतेः।
मज्जयन्ति हठात्कृष्ट्वा दर्शकान् सुषमोदधौ॥ ३६॥

प्रकृत्या पर्वतश्रेणीरिमा लङ्घयितुं स्वतः।
द्वादशद्वारनिर्माणं कृतं पूर्वं नृहेतवे॥ ३७॥

अत्रत्यैर्विविधैर्वृक्षैः पिहिता गिरिराशयः।
तनीयस्यस्तरङ्गिण्यो वङ्कगा धवलामृताः॥ ३८॥

इमां नैसर्गिकीं शोभां परमामवलोक्य के।
नाभवन्मोहिता भूम्यां जनास्तद्गतचेतसः॥ ३९॥

प्रकृतेः पक्षपातोऽत्र कश्चिदास्ते सुदुर्लभः।
योऽस्मिन् प्रदेशे सुषमां गौरवं चोदपादयत्॥ ४०॥

देशेऽस्मिन् प्रमुखा नद्यस्तिस्रः सन्ति महत्तराः।
कौशिकी-गण्डकी-कर्नालीतिनाम्ना सुविश्रुताः॥ ४१॥

पूर्वस्यां कौशिकीधारा मध्येदेशं च गण्डकी।
कर्नाली पश्चिमे भागेऽतलस्पर्शाऽतिवेगिनी॥ ४२॥

हिमालयमतिक्रम्य भोटदेशाद् विनिर्गताः।
त्रिस्रोतसि मिलन्तीमास्तिस्रो धुन्यः परस्परम्॥ ४३॥

आसामेव नदीनां तु प्रवाहाः सन्त्यनेकशः।
अभिव्याप्याखिलं देशं ये निषिञ्चन्ति मेदिनीम्॥ ४४॥

पर्वतीयप्रदेशस्य हृदयं काष्ठमण्डपः।
पूतापगाया वाङ्मत्याः पश्चिमोत्तरसंस्थितः॥ ४५॥

हर्म्यप्रासादलसितो नानाविधसुरालयः ।
चतुर्दिक्ष्वावृतः शैल-मालया परिशोभते ॥ ४६ ॥

रुद्रवत्या हनूमत्या मणिमत्यास्तथैव च ।
इक्षुमत्या जलैरस्य प्राच्यां भूमेर्निषेचनम् ॥ ४७ ॥

वाङ्मती कर्मनाशा च दक्षिणस्यां प्रभावती ।
एताः सर्वास्तरङ्गिण्यो भूषयन्त्यखिलं पुरम् ॥ ४८ ॥

पुरोऽस्या दक्षिणे भागे संस्थितं ललितं पुरम् ।
पूर्वस्यां विद्यते भक्तपुरं परमधार्मिकम् ॥ ४९ ॥

नेपाले गण्डकीदेशः पश्चिमस्थो महावपुः ।
भागेषु विंशतौ भक्तो यत्र गोर्खादयः स्थिताः ॥ ५० ॥

गण्डक्याः पश्चिमे भागे कर्नालीदेश उच्यते ।
सोऽपि षट्सूपखण्डेषु विभक्तो दुर्गमायनः ॥ ५१ ॥

विभक्तोपत्यकाप्यस्ति भागेषु नवसु क्रमात् ।
मध्यदेशो [1]युगर्क्षेशमण्डलेषु विभक्तिमान् ॥ ५२ ॥

शीतप्रधानदेशत्वान्नेपाले पार्वता जनाः ।
बलीयांसो भवन्त्येव श्रमवन्तोऽपि नित्यशः ॥ ५३ ॥

बहुधा दृश्यते तत्र जनेषु भुवि केषुचित् ।
आर्यमङ्गोलजात्योश्च शोणितस्य विमिश्रणम् ॥ ५४ ॥

पर्वतीया वपुर्ह्रस्वा दृढोरोजानुकीकसाः ।
महासाहसिकाः कार्ये नितान्तं धर्मभीरवः ॥ ५५ ॥

तेषां शरीरनिर्माणमद्भुतं विधिना कृतम् ।
पञ्चाशदधिकावस्था ज्ञायन्ते युवका इव ॥ ५६ ॥

सहचर्योऽपि तेषां तु चन्द्रमुख्योऽलिकुन्तलाः ।
निरामया निरातङ्काः कोकिलामधुरस्वराः ॥ ५७ ॥

---

१. १४ ।

परं ब्राह्मणराजन्यौ दीर्घाक्षौ लम्बनासिकौ।
गौराकृती दृढस्कन्धौ दृश्येते पार्वतौ क्वचित्॥ ५८॥

काष्ठमण्डपसान्निध्ये गिरिजाः स्थिरयौवनाः।
रमण्यो ललितालापा दर्शनीया निसर्गतः॥ ५९॥

यासामोष्ठयुगं बिम्बैर्नयनं हरिणीदृशा।
वक्षोजं बिल्वकुम्भाभ्यां दन्तान् दाडिमबीजतः॥ ६०॥

पिकेन लपनं मध्यं मृगेन्द्रेण गतिं द्विपैः।
घ्राणं कीरेण चापल्यं खञ्जनेन तरस्विना॥ ६१॥

रम्भयोरुद्वयं स्वापं शुना काकेन चेष्टनम्।
अलिना मूर्धजानास्यं शशिनाऽमृतधारिणा॥ ६२॥

पादश्रियं तामरसैः सौन्दर्यं तडिदाभया।
दुकूलयुगलं पारावतकण्ठेन चातकैः॥ ६३॥

दृढैकनियमं गण्डं मधूकच्छविना स्वतः।
सभासदः कविवरा उपमान्ति मनोरमम्॥ ६४॥

आकरा बहवस्तत्र प्राप्यन्ते शैलमध्यगाः।
अन्विष्टा नाधुना ते तु सर्वकारेण यत्नतः॥ ६५॥

पर्वतीयप्रदेशत्वात्साधनं बहु दुर्लभम्।
वैज्ञानिकं, परं प्राप्तुं शक्यतेऽल्पप्रयासतः॥ ६६॥

अमूल्याश्मादयः शक्याः प्राप्तुमत्र धराशयात्।
सौलभ्येन तथा स्वर्णरजतादिकधातवः॥ ६७॥

पर्वताञ्चलगेऽरण्ये दारवो बहुमूल्यकाः।
सन्ति चन्दनधूपादिसुगन्धतरवोऽपि च॥ ६८॥

असंख्याता प्रभारूपा महावीर्या महौषधी।
व्याप्ता सर्वत्र देशेऽत्र भिषग्भिर्या प्रयुज्यते॥ ६९॥

अन्यच्च तद्वनप्रान्ते व्याघ्रदन्तावलादयः।
स्वच्छन्दं निर्भया मत्ता गर्जन्तो विचरन्ति हि ॥ ७० ॥

हिमालयं समारभ्य गङ्गान्तं प्रयतावनिम्।
आरभ्य कौशिकी-धारां गण्डकीं यावदुर्वराम् ॥ ७१ ॥

सस्यादिश्यामलां मृद्वीमतिरम्यां सुपुष्पिताम्।
नानाविधरसालादिपादपैः परिशोभिताम् ॥ ७२ ॥

पुराकाले विदेहेन शासितां पृथिवीभृता।
तीरभुक्ति समाख्यान्ति पुरावृत्तविदो जनाः ॥ ७३ ॥

यां भूमिमधिगम्यैव याज्ञवल्क्यो महामुनिः।
सूर्यादधिगतः शुक्लयजुर्वेदं धियां निधिम् ॥ ७४ ॥

मैत्रेयी यत्र तत्पत्नी परतत्त्वार्थदर्शिनी।
ददौ सम्यक्तया ज्ञानं तत्त्वज्ञानपिपासवे ॥ ७५ ॥

शुको नाम मुनिर्विद्वान् व्यासपुत्रोऽनलोपमः।
अरणेर्मथनाज्जातोऽलौकिकज्ञानसँय्युतः ॥ ७६ ॥

लङ्घयन् विविधान् शैलान् यत्रागम्य विदेहतः।
परं तत्त्वं समासाद्य गतमानससंशयः ॥ ७७ ॥

गौतमोऽपि मुनिर्यस्यामुत्पद्यैव विलक्षणः।
तर्कशास्त्रप्रणेताऽभूत्तत्त्वज्ञानविचक्षणः ॥ ७८ ॥

आद्या भगवती सीता सुगीता जनकान्वये।
यत्रोत्पद्य दुरापापि सर्वानानन्दयज्जनान् ॥ ७९ ॥

कमला वाङ्मती गङ्गा यमुना लक्ष्मणाऽऽपगा।
जलाधिर्विरजा रत्नवती दुग्धवती प्रिया ॥ ८० ॥

हरिद्रा वर्तिका जङ्घा मण्डना चेति शैलजाः।
नद्यो यामभिषिञ्चन्त्यः प्राप्नुवन्ति सुरापगाम् ॥ ८१ ॥

नेयं सीमाऽधुना तस्या आसीदेषा पुरातनी।
भारतीयैस्तदर्धांशः शासकैरात्मसात्कृतः ॥ ८२ ॥

शेषांशो बहुकालाच्च नेपालान्तर्गतोऽभवत्।
सस्याद्युत्पादनं यत्र प्रचुरं जायते भुवि ॥ ८३ ॥

वैदेह्या जननस्थानं विदेहनगरं महत्।
नेपालान्तर्गतं सीतारामदिरशोभितम् ॥ ८४ ॥

एतन्निवासिनां रीतिः परिधानं तथाऽशनम्।
भारतस्थितवैदेहभूमिजातैः समं स्थितम् ॥ ८५ ॥

नेपालं पुण्यदं तीर्थं तिब्बतप्रान्तवासिनः।
मन्यन्ते सौगता लोका धर्म-जिज्ञासवो यथा ॥ ८६ ॥

तथैनं पावनं स्थानं वेदमार्गावलम्बकाः।
स्वकीयं सौकृतं तीर्थं ब्रुवते धर्मवल्लभाः ॥ ८७ ॥

अतो दार्शनिकश्रद्धासम्भृता वेदमार्गिणः।
व्यत्यायन्नन्तिमावस्थां हिमानी-निलये स्थिताः ॥ ८८ ॥

अत्रैवास्तीन्दुभूषस्य शम्भोः कैलासपर्वतः।
यत्र स स्वगणैः सार्धं रमते जगदीश्वरः ॥ ८९ ॥

पर्वतस्थेषु तीर्थेषु मुक्तिनाथस्य दर्शनम्।
महत्त्वमधिकं धत्ते धारणेयं जनस्थिता ॥ ९० ॥

हिमालयस्य सान्निध्ये तीर्थस्थानान्यनेकशः।
सन्ति, यत्र जनोल्लासः प्रतिपर्व प्रदृश्यते ॥ ९१ ॥

समुद्ररससंख्याकं[1] स्कान्दोक्तं लिङ्गमैश्वरम्।
यत्र तत्रापि शैलान्तः पाति श्वश्रेयसप्रदम् ॥ ९२ ॥

बहवो धार्मिका लोकाः प्रागेतानि विधानतः।
परिक्रम्य ततो यान्ति देवं पशुपतिं विभुम् ॥ ९३ ॥

---

१. ६४।



श्रीपशुपतिनाथस्य मन्दिरम् ।

ब्रह्मेश्वरं ब्रह्मतीर्थे स्थापितं लिङ्गमद्भुतम् ।
प्रत्यक्षफलदं नृणां सर्वपापहरं तथा ॥ ९४ ॥

अत्रैव शाङ्करं लिङ्गं समुपास्य महाऽसुरः ।
बाणो नाम ततो लब्धवरोऽभूच्छत्रुकर्षणः ॥ ९५ ॥

लिङ्गं पाशुपतं ज्योतिर्विद्यते यत्र पुण्यदम् ।
यद् वीक्ष्य पाशवीं योनिं न गृह्णन्ति नरः क्वचित् ॥९६॥

सौगता हिन्दवश्चापि द्रष्टुमायान्ति प्रत्यहम् ।
यल्लिङ्गं सर्वकार्याणि हित्वा तद्भावभाविताः ॥ ९७ ॥

एतन्महत्त्वं सर्वत्र पुराणेष्वभ्यगीयत ।
आगमैस्तु विशिष्यैव वर्णिता तन्महात्मता ॥ ९८ ॥

एतल्लिङ्गार्चनं लोकाः शिवरात्रौ विशेषतः ।
कुर्वन्ति मनसा वाचा कर्मणा च सभावनम् ॥ ९९ ॥

अस्मिन्नेव दिने लोका भारताल्लक्षतोऽधिकाः ।
गृहस्था यतिनश्चापि समायान्ति सुदूरतः ॥ १०० ॥

एतावान् जनसम्मर्दो नेपाले नैव जायते ।
कदाचित् कुत्रचिद् वापि यथाऽस्मिन् तिथिपर्वणि ॥१०१॥

अम्बिकापूजनं चापि भवत्यत्र विशेषतः ।
असङ्ख्यपशवो यस्मिन् दीयन्ते बलिरूपतः ॥ १०२ ॥

अत्रैव गौतमो बुद्धो हिंसकानां रुरुत्सया ।
लुम्बिनीं प्रयतां चक्रे जनुषा विगतज्वरः ॥ १०३ ॥

चीन-जापान-ब्रह्मादि-देशेभ्यो बौद्धमार्गिणः ।
असङ्ख्यताः सहस्राणि समायान्ति निरन्तरम् ॥ १०४ ॥

वाराहं नाम यत्क्षेत्रं तदप्यत्र विराजते ।
सौकरं रूपमाधाय यत्र विष्णुरवातरत् ॥ १०५ ॥

त्रिवेणीनामकं क्षेत्रं पुण्यदं पावनं महत् ।
ग्राहग्रस्तो गजो यत्र हरिणा द्रुतमुद्धृतः ।। १०६ ।।

एवं विधानि तीर्थानि सन्त्यनेकानि सर्वतः ।
तेनैष देशो लोकेऽस्मिन् परं गौरवमाश्रितः ।। १०७ ।।

यस्मिन् देशे निमिकुलभवाः प्राभवंस्तत्त्वविज्ञाः
विद्यारण्ये मृगपतिसमा यत्र धीराश्चरन्ति ।
गोविप्रत्राः सुकृतिमतयः क्षत्रिया यत्र भूपाः
सोऽयं देशो धरणितनया यत्र सम्भूय धन्या ।।१०८।।

एवंभूतं प्रकृतिसुभगं देशमेतं सुशान्तं
श्रीवीरेन्द्रो नृपतिरधुना पाति सम्यङ् नयेन ।
तद्वंश्यानां कुमुद-दयित-प्रोज्वलां कीर्तिमालां
विश्व-व्याप्तां हृदयसुखदां स्वात्मतोषाय वक्ष्ये।।१०९।।

इति श्री-पशुपति-कविविरचिते नेपाल-साम्राज्योदये
महाकाव्ये प्रथमः सर्गः ।।

## द्वितीयः सर्गः



यत्प्राङ्गणं भव्यमनेकतीर्थैर्
गङ्गार्कजा-निर्मल-तोय-पूतम् ।
स्वर्गलोद्घाटनमस्ति नूनं
तद् भारतं वेत्ति न को जगत्याम् ॥ १ ॥

महर्षयो यत्र च वेदमन्त्रान्
साक्षादकार्षुः प्रयतप्रदेशे ।
चराचरं विश्वमिदं यदीयं
लेभे प्रकाशं तमसः परस्तात् ॥ २ ॥

यत्कर्मणः क्षेत्रमति-प्रसिद्धं
श्रुत्यादिशास्त्रेष्वभिगीतमेतत् ।
सुरासुराभ्यामपि गीयमानं
नितान्तहृद्यं गरिमाणमाप ॥ ३ ॥

नारायणांशो रघुवंश्यरामो
लीलावतारो वसुदेवजन्मा ।
कृष्णश्च यत्तीर्थमयप्रदेशं
स्वजन्मनाऽभूषयतां दयालू ॥ ४ ॥

गोस्वामिनः सत्पुरुषा यदीये
विभिन्नराज्ये जनिमाप्य काले ।
सुधोपमां वाचमुदीरयन्तो
भक्तिप्रचारं व्यधुरस्तकामाः ॥ ५ ॥

सद्‌गर्हणीये पशुहिंसनादौ
प्रवर्तमानं सुकृतैर्विहीनम् ।
लोकं निरोद्धुं सुगतो महात्मा
सुदुष्करं यत्र तपश्चचार ॥ ६ ॥

तस्यैव भागः खलु राजपुत्रा-
ऽऽह्वय-प्रदेशो रणसिंहवासः ।
क्षत्रप्रधानो बलधैर्यशाली
संरक्षकः प्राक्तन-संस्कृतीनाम् ॥ ७ ॥

तेजो यदीयं द्युमणेः सदृक्षं
सुदुःसहं वह्निमिव प्रवृद्धम् ।
संवीक्ष्य भीत्या त्यजति स्म दूरा-
देव द्विषां सैन्यदलं युयुत्साम् ॥ ८ ॥

वीराङ्गना यत्र सुरक्षणाय
स्वाधीनताया निजसंस्कृतेश्च ।
प्रचण्डरूपं समरे दधत्यो
निपातयामासुरराति-सैन्यम् ॥ ९ ॥

अन्याः स्त्रियश्चापि सतीत्वधर्म-
रक्षापराः प्रज्वलदाश्रयाशे ।
समर्पयामासुरसून् हसन्त्यो
विषेहिरे नो यवनाभिमर्शम् ॥ १० ॥

तत्रापि वीर-प्रसवं महर्द्धि
मेवाडराज्यं रिपुराज्यजय्यम् ।
यत्रत्य-राजन्यकुलाति-शौर्य-
प्रभावतो व्याकुलमानसोऽन्यः ॥ ११ ॥

तद्राजवंशेऽजनि वीरमुख्यो
राजाप्रतापो भुवि विश्रुताख्यः ।
यत्तेजसा धर्षितशक्ति-पुञ्जो
म्लेच्छो न योद्धुं कुरुते स्म लिप्साम् ॥१२॥

तदन्वये लब्धजनिर्विवेकी
श्रीमान् यशोब्रह्मपदाभिधानः ।
लोकप्रियो नीति-पथानुयायी
बभूव नृणामधिपो दयालुः ॥ १३ ॥

सत्कर्मणा बाहुबलेन चापि
जितं महीपं करदं विधाय ।
बुभोज राज्यं विपुलं स्वशक्त्या
स देशभक्तो रिपु-भीतिमुक्तः ॥ १४ ॥

उपप्लुतो दैववशात्कदाचिन्-
म्लेच्छैः स राज्यं परिहाय वीरः ।
ययावुदीचीं दिशमात्तधैर्यः
स्वराज्यनाशेऽपि शुचाऽवपृक्तः ॥ १५ ॥

तीर्थाटनव्याजमुपेत्य धीरः
श्रिया विहीनोऽपि महाप्रभावः ।
स्मरन्नुमा-जानि-पदाम्बुजातं
गोरक्षनाथाजिरमाप सौम्यम् ॥ १६ ॥

श्रद्धा-प्रसूनाञ्जलिमर्पयित्वा
विनीतचित्तः स नतेन मूर्ध्ना ।
न्यषेवत प्रत्यहमाशुतोष-
मनन्यभावेन समर्पितात्मा ॥ १७ ॥

काले व्यतीते कियति प्रसन्नो
दयार्द्रचेता भगवान् पुरारिः।
स्वप्ने समागत्य वरार्थिनं तं
नृपं गिरं हर्षकरीमुवाच ॥ १८ ॥

अभीप्सितं यत्किल हार्दिकं ते
सम्प्राप्य तद् वत्स ! सुखं लभस्व।
सपर्यया दुष्करयाऽनयाऽहं
प्रसादमासाद्य पुरः स्थितोऽस्मि ॥ १९ ॥

निसर्गरम्यां श्रुतिबोधगम्यां
सुधोपमां वाचमथो निशम्य।
प्रोन्मीलिते तेन दृशौ समाधेः
पुरान्तकाङ्घ्रि-प्रणयं श्रितेन ॥ २० ॥

स तस्थिवांसं पुरतः परेशं
वृषाधिरूढं सहितं भवान्या।
तपोमयं भूति-विभूषिताङ्गं
भुजङ्ग-भूषं गिरिशं ददर्श ॥ २१ ॥

पादौ गृहीत्वा कुसुमेष्वराते-
र्मनोहरौ कोकनदप्रभासौ।
तुष्टाव रोमाञ्चित-चारुदेहः
प्रेमाश्रुरुद्धैर्मधुरैर्वचोभिः ॥ २२ ॥

नमोऽस्तु ते जह्नुसुताविभर्त्रे
नमोऽस्तु तेऽज्ञानमलापहर्त्रे।
नमोऽस्तु ते निर्मलबुद्धिकर्त्रे
नमोऽस्त्वनन्ताय सुधांशुधर्त्रे ॥ २३ ॥

स्वकार्यसिद्ध्यै प्रहितं मघोना
पुष्पायुधं विघ्नकरं समाधेः ।
चक्रे क्रुधा यो भसितावशेषं
तस्मै नमो विघ्नहराय तुभ्यम् ॥ २४ ॥

समुद्रजातं गरलं महार्चिर्
दृष्ट्वा जगद्ध्वंसकरं निपीय ।
जुगोप यो विश्वमिदं विभीतं
तस्मै नमो भीतिहराय तुभ्यम् ॥ २५ ॥

सेन्द्राः पुरस्कृत्य सरोजयोनिं
रणेऽभिभूता दितिजैरमर्त्याः ।
क्लेशान्तकं यं शरणं प्रयान्ति
तस्मै नमः क्लेशहराय तुभ्यम् ॥ २६ ॥

अनादिदेवं पुरुषं पुराणं
वदन्त्यमायं त्रिगुणैरतीतम् ।
पुराविदो यं जगदेकसारं
तस्मै नमः शल्यहराय तुभ्यम् ॥ २७ ॥

जानामि नाहं तव यन्त्रपूजां
मन्त्रं न वा स्तोत्रमनुत्तमं च ।
जानाम्यहो त्वत्पदपद्ममेकं
भवाब्धि-मग्नोद्धृति-दीर्घनावम् ॥ २८ ॥

तथापि शम्भो ! जडिमादिदोषा-
करे जनेऽस्मिन् दुरिताऽभिभूते ।
कृपां व्यधत्तेति न चित्रमेतत्
कः स्यात्पिता यो न भवेत्सुते स्निक् ॥ २९ ॥

स्तुत्वैवमीशं स उवाच राजा
गतं स्वराज्यं मम कृत्तिवासः ! ।
यथा पुनर्हस्तगतं भवेत्तत्
तथा मदर्थे कुरु दीनबन्धो ! ॥ ३० ॥

राजोदितां वाचमिमां निशम्य
महेश्वरोऽनन्तविशालमायः ।
भक्त-प्रबोधाय हितां सुवाचं
विहस्य किञ्चिन्निजगाद योगी ॥ ३१ ॥

पराभिभूतं सकलं स्वराज्यं
न चाधुना प्राप्स्यसि सोद्यमोऽपि ।
भाले विधात्रा लिखितो नराणां
वस्तूपभोगः सुकृतानुबन्धी ॥ ३२ ॥

बाणासुरावासितशोणिताख्यं
पुरं प्रसिद्धं भुवि भूति-भव्यम् ।
परैरगम्यं सकलाधिहीनं
प्रयाहि सम्प्राप्स्यसि राज्यलक्ष्मीम् ॥ ३३ ॥

पुरं हि तत्प्राप्य पराक्रमैः स्वैर्
विजित्य भूभागमतीव शस्तम् ।
राज्याधिपस्त्वं भवितासि शीघ्रं
मा भूत्तवान्तर्वितथाभिशङ्का ॥ ३४ ॥

इति ब्रुवाणो भगवान् महेशो-
ऽदृश्योऽभवच्चण्डिकया सहाऽऽशु ।
सुप्तोत्थितो भूपतिरार्द्रचेताः
स्वप्नार्थचिन्ताविषितो बभूव ॥ ३५ ॥

व्यलोकि यत्स्वप्नगतं निशीथे
तन्नानृतं स्यादिति भावयेऽहम् ।
निमित्तविज्ञा हि वदन्ति शस्तं
स्वप्नं फलेनानुगतं शुभेन ॥ ३६ ॥

इत्थं विचारैकपरे नरेशे
कश्चित्तपस्वी ज्वलदग्निकल्पः ।
जितान्तरारिः करुणैकसिन्धु-
स्तत्सन्निधौ सद्य उपस्थितोऽभूत् ॥ ३७ ॥

पुरः स्थितं भस्मविभूषिताङ्गं
तपस्विनं वीक्ष्य धराधिनाथः ।
प्रसन्नचेताः प्रणताङ्गयष्टिः
पादौ तदीयौ शिरसाऽऽससाद ॥ ३८ ॥

उवाच तं साश्रु निरुद्धकण्ठः
त्वद्दर्शनेनास्मि विमुक्तचिन्तः ।
अकिंचनत्वान्नहि ते सपर्यां
विधातुमीशोऽस्मि विधातृकल्प ! ॥ ३९ ॥

सनम्रमेवं वदति क्षितीशे
तस्मिन् दयार्द्रः स उवाच योगी ।
सतां जनानामुचिता तु पूजा
सद्भावनैव प्रथिता नरेन्द्र ! ॥ ४० ॥

त्वां चिन्तितं योगबलेन वीक्ष्य
कर्तुं विचिन्तं समुपागतोऽस्मि ।
विलोकितं यच्छयने त्वयाऽद्य
सत्यं भवेत्तत्त्वमवेहि नूनम् ॥ ४१ ॥

इति ब्रुवन्तं तमुवाच राजा
कृत्वा कृपां मामभिधेहि सोत्कम्।
यत्राधिगन्तुं विभुरादिदेश
कीदृक् स देशोऽसुर-बाणजुष्टः ॥ ४२ ॥

स तेन पृष्टो निजगाद योगी
वचो मदीयं शृणु राजवर्य!।
यस्येतिवृत्तं बहुधा बहुत्र
तन्त्रादिशास्त्रे प्रथितं विचित्रम् ॥ ४३ ॥

नेपालसंज्ञोऽतिपुरातनोऽयं
देशो हिमाच्छादितशैलपङ्क्त्या ।
सुशोभितः प्राकृतदृश्यरम्यो
न कस्य चेतो हरते समन्तात् ॥ ४४ ॥

यत्राऽऽपगा [1]व्याघ्रवती विशाला
चञ्चत्तरङ्गा नवफेनभङ्गा ।
पयस्विनी विष्णुमती च पुण्या
प्रोद्भिद्य शैलान् वहतोऽधुनापि ॥ ४५ ॥

यदीयपानीयमतिप्रसन्नं
सुधोपमं स्वादु रुजापहारि ।
चन्द्रावदातं हिमवत्सुषीमं
निपीय शान्तिं मनुजा लभन्ते ॥ ४६ ॥

प्रातः समुत्थाय यदीयतीर-
मासाद्य सम्प्राप्तजलावगाहाः ।
द्विजाः स्वरैर्वेदमनून् पठन्तो
दैनन्दिनं कृत्यमुपाश्रयन्ते ॥ ४७ ॥

---

१. वाङ्मती

तत्सङ्गमोपान्ततटप्रदेशे
तपो विधातुं स्थिरचित्तशक्तिः ।
नेनामकः सिद्धमुनिर्महात्मा
संयोजयामास मनः समाधौ ॥ ४८ ॥

तपस्यतस्तस्य मुनेरनेकाः
समा व्यतीयुः स्थिरचित्तवृत्तेः ।
तद्गौरवाकृष्टमनाः सुधर्मा
नृपोऽन्वहं तं समगाद् विनीतः ॥ ४९ ॥

सुप्तोत्थितं मर्त्यमिव प्रतीरे
मुनिं समाध्युत्थितमाप्तवाचा ।
ज्ञात्वा नृपस्तत्क्षणमाजगाम
तदन्तिकं तद्गुरुतानुकृष्टः ॥ ५० ॥

स तस्य पादावभिवन्द्य पूर्वं
जगाद तं सिद्धमुनिं महीपः ।
विश्राणयाऽऽशीर्वचनं शुभं मे
यद्राज्यकार्याय सदा क्षमः स्याम् ॥ ५१ ॥

दत्वाऽऽशिषं भूपवराय तस्मै
प्रसन्नचेताः स मुनिर्दयालुः ।
सम्मार्ज्य नद्याः पयसा शरीरं
दध्यौ परं ब्रह्म गुणैरतीतम् ॥ ५२ ॥

तदाशिषा तत्समयस्य भूपो-
ऽभवत्प्रजारञ्जनशक्तियुक्तः ।
तेनास्य देशस्य महीप ! नाम
जातं हि नेपाल इति प्रसिद्धम् ॥ ५३ ॥

तस्मिन्नृपे शासति नीति-विज्ञे
नेपालदेशं भयविप्रमुक्तम् ।
गोपालवंश्याः सुखवासहेतोः
समागमन्नन्दसुतेन साकम् ॥ ५४ ॥

एकाऽप्रसूता सुरभिस्तदीया
नेनामिका पल्लवरागताम्रा ।
निर्धारितेऽनेहसि कानने या
दिनं दिनं स्मैति तृणादनाय ॥ ५५ ॥

विविक्तदेशं सहसाऽऽनुवत्या-
स्तस्यास्तनेभ्यः पयसां क्षरन्तीम् ।
विलोक्य धारामवगन्तुमेतां
तामन्वियाय द्रुतमेव गोपः ॥ ५६ ॥

तत्स्थान-पादार्पण-जात-दुग्धां
तां सौरभेयीमवलोक्य सोत्कः ।
पयोभिराप्लावितत्प्रदेशान्
मृदं स आरब्ध मुदाऽपनेतुम् ॥ ५७ ॥

तत्राल्पिकायां मृदि निर्गतायां
प्रादुर्बभूवेश्वरलिङ्गमेकम् ।
ज्योतिःस्वरूपं जगतां हिताय
यदुच्यते पाशुपतं पृथिव्याम् ॥ ५८ ॥

निशम्य वृत्तान्तमिमं मुनीनां
वरः स नेनामकसिद्धयोगी ।
संवीक्ष्य तल्लिङ्गमरं विधानैः
संस्थापयामास नदीप्रतीरे ॥ ५९ ॥

अशक्नुवन् सोढुमसौ तदीयं
तेजोऽविषह्यं शतभास्वदाभम् ।
गोपालमुख्यो भसितावशेषः
सद्यो ययौ स्वर्गमदभ्रसौख्यम् ॥ ६० ॥

अतः परं तस्य सुतस्य कण्ठे
नेपाललक्ष्म्या निदधे वरस्रक् ।
इत्थं महीपः प्रथमो बभूव
गोपालवंश्यो भुवि विश्रुताख्यः ॥ ६१ ॥

स भूमिपालो [1]वसुनागवर्षा-
ण्यशात्स्वराज्यं सकलाऽऽधिहीनम् ।
राज्ये तदीये मनुजाः समेऽपि
मनःप्रसादं दृढमन्वभूवन् ॥ ६२ ॥

बभूव तस्यैव नृपत्वकाले
निर्माणकार्यं शिवमन्दिरस्य ।
यदीयवंश्या बहवो महीपा
नेपालराज्यं विधिवच्छशासुः ॥ ६३ ॥

अजातपुत्रोऽवनिपस्तदन्त्यो
यक्षाभिधानो निजजीवनान्ते ।
आभीरवंश्याय गुणोज्ज्वलाय
ददौ स्वराज्यं गुणगृध्नुचेताः ॥ ६४ ॥

तदीयवंश्यो वरसिंहनामा
सम्प्राप्य राज्यं नितरां प्रसन्नः ।
सोऽप्यन्तकालेऽर्पितपुत्रभारो
ययौ तपस्तप्तुमरण्यकोणे ॥ ६५ ॥

---

१. ८८ वर्षाणि यावत् ।

किरातमुख्येन यलम्बरेण
व्यापादितेऽस्मिन्नृपतौ विलप्य ।
तद्राज्यलक्ष्मीरुररीचकार
किरातवंश्यप्रभुतां सबाधम् ।। ६६ ।।

तदीय-वंश्यान्तिम-भूमिपालो
गस्ती च राज्ञा निमिषेण युद्धे ।
पराजितः स्वां रमणीयभूमिं
विहाय नेत्राविषयो बभूव ।। ६७ ।।

स्वबाहुशक्त्या जितसर्वभागः
सोमान्वयीयो वसुधाधिनाथः ।
राज्यश्रियं प्राप्य तया सरागं
रेमेऽनिशं वर्षशतं प्रसीदन् ।। ६८ ।।

अनात्मजो यो नृपतिस्तदन्त्यः
श्रीभास्करो नाम विशुद्धवृत्तिः ।
राज्याधिपं वंशजमेव नैजं
श्रीभूमिवर्माणमसौ व्यधत्त ।। ६९ ।।

वंश्यास्तदीया बहवो हि भूपा
नेपालराज्यं जुगुपुः सयत्नम् ।
यशःप्रियस्तेषु बभूव राजा
श्रीशंकरो विज्ञवरो वरेण्यः ।। ७० ।।

राजत्वकालेऽस्य बहुप्रचारः
श्रीशंकराचार्यमतस्य जातः ।
सनातनो धर्म उदैत्समन्ता-
दासन् द्विजाः पूज्यतमाः प्रजानाम् ।। ७१ ।।

द्वेषात्ततो बौद्धमतानुरागा-
जना द्विजाञ्जघ्नुरवैरचित्तान् ।
[1]अभ्राभ्रजायामितसङ्ख्यकानां
तेषां रमण्योऽपि सतीत्वमीयुः ॥ ७२ ॥

ताथागता मार्गगताश्च पान्था
विनाशमापुर्दुरितेन तेन ।
तच्छान्तिकामः स गिरीशलिङ्गं
शान्तेश्वरं स्थापितवान्नरेन्द्रः ॥ ७३ ॥

कर्णाटदेशात्समुपेत्य नान्यो
गृहीतसैन्यः शतमन्युतेजाः ।
नेपालमाक्रम्य वसुन्धरेश-
मानन्दमल्लं प्रजिगाय युद्धे ॥ ७४ ॥

तद्वंशजाता क्षितिपा इदानीं
कुर्वन्ति राज्यं पृथगेव भिन्नाः ।
परस्परं नैषु धराधिपेषु
पश्याम्यहं साधुतयैकमत्यम् ॥ ७५ ॥

शुभप्रदोऽयं भवते महीप !
कालः स्वशक्त्या जय भूमिमेताम् ।
संशाधि नीत्या जनतानुकूलः
स्वप्नो हि दैवो न वृथा कदाचित् ॥ ७६ ॥

---

१. ७०० ।

इत्युक्त्वा मधुरं वचोऽवनिपतेर्दोलायमानं मनो
वाढं विश्वसितं विधाय च गते तस्मिन् महातापसे ।
राज्ञा निर्मलचेतसा गुरुवरं ध्यात्वा शिवं साम्बिकं
गन्तुं तत्र मनो दधे हृदि गतं व्यामुञ्चता संशयम् ॥७७॥

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
द्वितीयः सर्गः ॥



# तृतीयः सर्गः

अथ प्रभाते मनुजाधिनाथो
हर्षोद्गमैर्दीप्तशरीर-कान्तिः ।
स्नानादिकृत्यं विधिवत्समाप्य
गन्तव्यदेशं त्वरितं प्रतस्थे ॥ १ ॥

प्रस्थानकाले त्रिविधोऽपि वातो
राजीवरेणून् विकिरन् दिशासु ।
संसूचयन् भाविसुखं समोदो
महीन्द्रमासेवितुमाजगाम ॥ २ ॥

महीरुहेष्वङ्कुरयन् दलानि
पङ्केरुहाणि स्फुटयन् समन्तात् ।
संचारयन् कामिषु कामभावं
वियोगिनां हृन्दि विद्रुयमानः ॥ ३ ॥

रसालवृक्षैः सह माधवीनां
योगं समन्ताद्रचयन् पृथिव्याम् ।
विमोचयन् चञ्चुपुटं पिकीनां
सुगुञ्जयन् चञ्चलचञ्चरीकान् ॥ ४ ॥

सम्पादयन् चेतनतां जडेऽपि
समाधिभाजां हृदयं विकुर्वन् ।
कालो वसन्तः शिशिरान्तकारी
सद्यः सिषेवे गुणिराजमेनम् ॥ ५ ॥

सृतिम्प्रपन्नं महतां वरेण्यं
विज्ञाय भक्तं त्रिपुरान्तकस्य
अनातपैः पक्वफलैश्च वृक्षाः
सच्चक्रिरे काननजाः समोदम् ॥ ६ ॥

पयः पिबन्तं नवजातडिम्भं
निवारयन्ती चरणैः कुरङ्गी ।
वस्त्राञ्चलं तस्य मुखेन धृत्वा
प्रेमाणमादर्शयदात्मभावात् ॥ ७ ॥

शुकाङ्गना वाचमुदाहरन्ती
सुकर्मणे भूपतये सुपक्वम् ।
सुधोपमं दाडिममर्पयित्वा
मेने स्वमात्मानमलं कृतार्थम् ॥ ८ ॥

स्वदेशमेतं तमवेक्ष्य केकी
विहाय नीडं समुपेत्य मार्गम् ।
प्रसादयामास सुचारुलास्यैः
सद्यः पुरो रञ्जकतां दधानैः ॥ ९ ॥

मेघोऽपि विद्युन्नयनैः सतोयो
घोरान्धकारैरवरुद्धमार्गम् ।
प्रकाशयंस्त्यक्तसुखस्य तस्य
जलाभिषेकेण जहार खेदम् ॥ १० ॥

सहस्रशो हिंसकवन्यजन्तु-
व्याकीर्ण-भीतिप्रदकाननेऽस्मिन् ।
उत्सादयन् वर्त्मगतान्तराय-
मग्रेसरश्चैव बभूव राजा ॥ ११ ॥

व्याघ्रादिकीर्णं भयभीत-चित्तै-
रलङ्घनीयं गिरिभागमुग्रम् ।
वनं च घोरं व्रजतोऽपि तस्य
मनाङ् न चित्तं भयमाललम्बे ॥ १२ ॥

ततः स नेपालमहीं विचित्रां
नानाविध-प्राकृतदृश्य-सौम्याम् ।
महोच्च-शैलावृत-सर्वभागां
ददर्श माहेश्वर-चारु-धाम ॥ १३ ॥

भव्यं परं मन्दिरमन्धकारेर्
धुन्यास्तटस्थं सुरवर्त्मचुम्बि ।
विचित्र-चित्राञ्चित-चारुरूपं
मण्यादिरत्नाचितमाजगाम ॥ १४ ॥

प्रणम्य गौरीश्वर-पादपद्मं
शक्तिं प्रदेहीति गिरन् वचांसि ।
ततोऽप्युदीचीं दिशमाशु गत्वा
सम्प्राप लुम्जुङ्गपुरं महीपः ॥ १५ ॥

तत्रत्यभूपं समरे विजित्य
शिव-प्रसादेन कृशानुतेजाः ।
विमुक्तदोषैर्निज-सौमनस्यैः
प्रसादयामास स सर्वलोकान् ॥ १६ ॥

औदार्यसारल्यबलानि तस्य
विलोक्य सर्वा प्रकृतिः प्रसन्ना ।
समस्ततीर्थोपहृतैः पयोभी-
राज्याभिषेकं विधिवच्चकार ॥ १७ ॥

मृगेन्द्रसत्त्वस्तनयो द्वितीयः
श्रीद्रव्यशाहोऽवनिपस्य तस्य ।
पित्रासनस्यानधिकारमाप्य
विषीदति स्मातितरामजस्रम् ॥ १८ ॥

अलं विषादेन कुरुष्व युद्धं
विनिश्चयस्ते विजयः समन्तात् ।
इत्यन्तरात्मप्रतिबोधितोऽसौ
गोरक्षदेशं त्वरितं प्रतस्थे ॥ १९ ॥

स तत्र गत्वा समरे विजित्य
तद्देशभूपं समलब्ध राज्यम् ।
भाग्येऽनुकूले नहि कोऽपि शक्तो
भवेद् विधातुं प्रतिकूलभावम् ॥ २० ॥

ततो विषण्णा रिपुराज्यलक्ष्मी-
रनाश्रया तं करुणार्द्रभावम् ।
प्रभाविनं सिंहसमानवीर्यं
नृपात्मजं स्वामितयाऽनुवव्रे ॥ २१ ॥

प्रजाजनैः संस्तुतसाधुकृत्यो
गृहीततत्रत्यसमस्तभारः ।
प्रजा यथा स्यान्मम सौम्यवृत्ति-
स्तथा प्रयत्नं व्यदधादलं सः ॥ २२ ॥

नृपासनस्थोऽयमनस्तरागो
मध्येसभं सर्वकलाप्रवीणः ।
निशासु नक्षत्रगतौषधीश
इवावभासे तिमिरं व्यपोहन् ॥ २३ ॥

राज्याप्तिकाले मनसाऽचलेन
संचालितैः सैन्यबलैर्महद्भिः।
बाह्वोर्बलैश्चात्मगतं परेषां
चकार राज्यं विधिना समृद्धम् ॥ २४ ॥

न्यायेन धैर्येण बलेन बुद्ध्या
शौर्येण धर्मेण च साधुवृत्तिः।
लोकान् समस्ताननुरञ्जयन्त्स
यशो वितेने भुवि सर्वदिक्षु ॥ २५ ॥

गोरक्षराज्यस्य महीप एष
ख्यातिङ्गतः सर्वदिशासु शीघ्रम्।
प्रवर्तकः शाहकुलस्य योऽभूद्
वसुन्धरा येन बभूव धन्या ॥ २६ ॥

अस्योन्नतिं वीक्ष्य तदग्रजन्मा
पित्रासनस्थो नरशाहराजः।
दिवानिशं द्रोहमना विधातुं
स्वायत्तमाचेष्टत तस्य राज्यम् ॥ २७ ॥

माता तदीया विधवा वसन्ता-
वती सती राजनयप्रवीणा।
विज्ञाय पुत्रस्य दुरात्मभावं
चकार यत्नं कलहप्रशान्त्यै ॥ २८ ॥

[1]चेपेतटिन्यां गिरिनिर्गतायां
चन्द्रावदातामृतशोभितायाम्।
शान्तिप्रिया नैजपयोधरीयं
जहौ पयो व्याकुलमानसा सा ॥ २९ ॥

---

१. चेपे नाम्नी का चिन्नदी।

तेनैव राज्यद्वयचारुसीमां
विभज्य शान्ति परमामलब्ध ।
परं तदीयाग्रचसुतो हि गृध्नुर्
न प्राभवद्द्रोहमति विहातुम् ।। ३० ।।

अन्योन्यभेदं क्षितिपेषु वाढं
ज्ञात्वोपराज्यं कुटिलेषु धीरः ।
श्रीद्रव्यशाहः पुनराहवार्थी
प्रचक्रमे सैन्यशतेन साकम् ।। ३१ ।।

एकैकशोऽजीर[1]-गुरुङ्गथोक-
सिंहानचोकादि-गिरि-प्रदेशान् ।
राज्ये स्वकीये गमयाञ्चकार
विजित्य शक्त्या परया स भूपः ।। ३२ ।।

एतज्जयानन्तरमेव काले
कियत्यतीते त्रिदिवं गतायाम् ।
राज्ञो जनन्यां सहजस्तदीयो
गोरक्षराज्याक्रमणाय येते ।। ३३ ।।

अभूतसंग्रामपराङ्मुखोऽसौ
श्रीद्रव्यशाहोऽनिशखड्गहस्तः ।
सदैव लोकस्य कलङ्क-भीत्या
न चाग्रियेणाहवमीहते स्म ।। ३४ ।।

तस्याग्रजोऽथापि चमूसहस्र-
मादाय युद्धस्य ननाद भेरीम् ।
ईर्ष्यावतां लोभविमोहितानां-
महो द्रुतं याति विवेकशक्तिः ।। ३५ ।।

---

१. अजीरादयः पर्वतीयप्रदेशविशेषाः ।

युद्धाभिलिप्स्वोरुभयोश्चमूनां
परस्परास्कन्दनमाप्रवृत्तम्[1] ।
परं तदीयाखिलसैन्यशक्तिर्
गोरक्षसैन्याभिमुखं न तस्थौ ॥ ३६ ॥

पराजितं तस्य विशालसैन्यं
निवृत्तमासीदसुरक्षणेप्सु ।
किं सत्त्वहीनः समदो द्विपेन्द्रो
मृगेन्द्रसत्त्वाभिभवे समर्थः ॥ ३७ ॥

[2]धर्माहिसर्पद्विजराजवर्षा-
दारभ्य [3]खद्वीपविषीन्दुवर्षम् ।
प्रशासता राज्यमनेन राज्ञा
स्वर्लोकराज्योत्सुकताऽऽललम्बे ॥ ३८ ॥

हित्वा समस्तनिजबान्धवभृत्यवर्गान्
तस्मिन् गते सुरपदं वसुधाधिनाथे ।
राज्यश्रिया नयनवारि परित्यजन्त्या
सेहे न तच्चिर-वियोगज-चण्डतापः ॥ ३९ ॥

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
तृतीयः सर्गः ॥



---

१. अस्कन्दनं युद्धम् ।
२. १५५९ ई० ।
३. १५७० ई० ।

# चतुर्थः सर्गः

अथो तदीयस्तनयः सुमेधाः
पुरन्दरो नाम धराधिनाथः।
लोकाभिरामो नयनाभिरामो
दयासरस्वान् रणरङ्गधीरः ॥ १ ॥

विद्यावतां संसदि लब्धमानो
न्यायाधिकर्ता जनदुःखहर्ता।
धर्मस्य धाता विभवप्रदाता
बभूव लोके श्रुतकीर्तिराशिः ॥ २ ॥

तातेन दत्तं किल राज्यभारं
वोढुं क्षमः शेष इवावनिं सः।
न्यायेन धर्मेण विभूतिभिश्च
शशास रम्यामवनीं समृद्धाम् ॥ ३ ॥

त्रिंशत्समाः शासदयं धरित्री-
माकारितो गोत्रभिदा मघोना।
ध्यात्वा पदाम्भोजमनङ्गशत्रोः
सुखास्पदं दिव्यपुरीं जगाम ॥ ४ ॥

ततः परं बुद्धिमतां वरिष्ठः
शान्तस्वभावः करुणावतारः।
श्रीछत्रशाहो धृतराज्यभार-
स्तदात्मजोऽभून्नृपतिर्महौजाः ॥ ५ ॥

तदाधिपत्ये न हि कोऽपि दीनो
न चात्र कश्चित् सुकृतैर्विहीनः।
सद्भावना-मूलमनुं जपन्तः
कालं व्यतीयुः सुखदं जनौघाः॥ ६॥

विप्राः समस्ताः श्रुतिशास्त्ररक्ताः
स्त्रियः स्वधर्माऽऽचरणेऽनुरक्ताः।
राजन्यवर्गा भुजशक्ति-भक्ता
वैश्यास्तथाऽन्ये व्यसनेऽपरक्ताः॥ ७॥

राज्योपभोगं स तु सप्तमासान्
विधाय सन्तानविहीन एव।
कालाहिना दुर्मनसाऽभिदष्टो
जनाननाथान् विदधद् गतः स्वः॥ ८॥

अनन्तरं तत्सहजः कनीयान्
श्रीरामशाहोऽवनिपत्वमाप।
नैतत्समः कोऽप्यभवद् बलीयान्
राजा प्रजारञ्जनलब्धवर्णः॥ ९॥

अयं मनस्वी नितरां यशस्वी
विद्वद्गुणज्ञो रणकौशलज्ञः।
कलानुरागो विषयापरागो
बलाभिमानोऽतुलनीयदानः॥ १०॥

प्रत्यर्थिमातङ्गकदम्बसिंहो
विद्वन्मनोमानसराजहंसः।
हंसः प्रजासन्ततिसारसानां
रणाजिरे सैन्यचकोरचन्द्रः॥ ११॥

अनेकधा पार्श्वगता महीपा
एनं समालोक्य युधि प्रवृत्ताः ।
तेजः परं सोढुमशक्नुवन्तः
प्राणानयाचन्त न लज्जिताः किम् ॥१२॥

विजित्य तान् मत्तकरिप्रमत्तान्
योऽरातिवर्गान् सकलं तदीयम् ।
राज्यं स्वराज्ये गमयाञ्चकार
प्रशंसनीयः स नृपः कथं नो ॥ १३ ॥

अनेकयागा विहिता विशुद्धा-
श्चक्रे च नव्यं सुरसद्म जीर्णम् ।
येनात्र सौधांशव-बिम्बकीर्ति-
माला-विराजच्छुतशीलभाजा ॥ १४ ॥

संग्रामभूमौ [1]लुमजुङ्गभूप-
मुपागतं योद्धुमखर्वगर्वम् ।
तिग्मांशुतिग्मांशुकृपाणपातैर्
हतप्रभं पङ्गुनिभं स चक्रे ॥ १५ ॥

प्रत्यर्थिसङ्घैर्धूतखड्गहस्तै-
रारभ्यमाणेऽधिकलोमहर्षे ।
रणे व्यतीयुः शरदोऽस्य नैका-
स्तथापि मम्लौ न मुखाम्बुजश्रीः ॥ १६ ॥

उपप्लवो नैकविधो न राज्ये
शान्तो जनः सत्कृतिलग्नचेताः ।
तदाधिराजोऽयमभूतपूर्वं
चक्रे विधानं जनतोपकृत्यै ॥ १७ ॥

---

१. प्रदेशनामेदम् ।

प्राप्ते विवादे नगरोपकण्ठे
कुल्याल्पसेतुप्रभृतिप्रसङ्गे ।
निष्पक्षपातं सुविवेकबुद्ध्या
न्यायाधिकर्त्री पुरसंसदेव ॥ १८ ॥

राजैव राज्यस्य समस्तभूम्या
अधीश्वरः स्यान्न तु कश्चिदन्यः ।
तस्यान्तरादेशमिमां [1]ग्रहीता
जनो भवेत्कर्कशदण्डपात्रम् ॥ १९ ॥

कृताभियोगे सदसच्च वेत्तुं
न्यायालये विष्णुशिलां स्पृशद्भ्याम् ।
ताभ्यामुभाभ्यां कलहप्रियाभ्यां
साक्ष्यं प्रदेयं विधिवेत्तुरग्रे ॥ २० ॥

नारी दुराचारपरा प्रमाणात्
प्रमाणिताऽभ्रेषविदा[2] यदि स्यात् ।
निर्वासनीया [3]निगमाद् भवेत्सा
तत्पक्षपाती तु शतेन दण्ड्यः ॥ २१ ॥

अभिग्रहं जेतुमनाः स्वपक्षे
न्यायाधिपं कर्तुमवैधरीत्या ।
चेष्टिष्यते चेत्स च दण्डनीयो
निष्कासनीयश्च भवेन्नगर्याः ॥ २२ ॥

---

१. अत्र तृन् प्रत्ययः न तु तृच् अतएव षष्ठीविभक्तिर्न, न लोका व्ययेति षष्ठीनिषेधात् ।

२. न्यायविदित्यर्थः ।

३. अत्र निगमशब्दः नगरपर्यायवाची ।

हत्याभियोगे सकलाः सगोत्रा
द्विजातयोऽन्ये यतिनो विरक्ताः ।
विमुण्डिताः स्वीयप्रदेशभागा-
न्निर्वासिताः स्युः परिभावमाप्ताः ॥ २३ ॥

परं प्रधानः सचिवोऽथवाऽन्ये
द्विजेतरा वैतनिकाश्च भृत्याः ।
चतुष्पथे निष्करुणं महोग्रं
प्राप्स्यन्ति दण्डं किल मृत्युरूपम् ॥ २४ ॥

एतैर्विधानैरनुशासनान्तः-
पदोपविष्टा भृतकाः समग्राः ।
अनीतिरीतिं सहसा विहाय
पादौ न्यधुः शुद्धपथे विवेकैः ॥ २५ ॥

प्रशासनांशेऽस्य महाप्रभावो
जातोऽभिरामो बहुकीर्तनीयः ।
प्रशासकाः सत्पथमाचरन्तो
न्यायप्रियाः कृत्यविधावभूवन् ॥ २६ ॥

विस्रम्भनेता जनतालतानां
जनप्रियोऽसौ दुरवापवृत्तिः ।
प्रचालयन्नन्यविधं विधानं
निरापदं राज्यमलं शशास ॥ २७ ॥

दिवं गते राजनि रामशाहे
महामनीषी गुणवान् कृतज्ञः ।
बभूव शान्तोऽप्रतिमप्रभावः
श्रीडम्बरो नाम भुवोऽधिनाथः ॥ २८ ॥

निरन्तरायं महतौजसाऽसौ
राज्यं निजं पूर्वजभूमिपेभ्यः ।
समागतं चारुतया जुगोप
वर्षाणि यावन्नव नव्य-नव्यम् ।। २९ ।।

ततो भुवा नाथतया बलिष्ठो
लब्ध-प्रतिष्ठो नृपनीतिदक्षः ।
श्रीकृष्णशाहोऽतुलनीयतेजा
वृतः स कामं प्रियतानुरूपः ।। ३० ।।

उपप्लवो राज्यगतो न कोऽपि
तस्याधिपत्ये महनीयकीर्तेः ।
मध्येऽवनीशप्रजयोः कटुत्व-
चिह्नं न वा लक्षितमन्यजातम् ।। ३१ ।।

वर्षाणि यावद्दश गां पवित्रां
वनावलीपर्वतरम्यभागाम् ।
धर्मात्मनाऽनेन विभुज्य कामं
जग्मे परं दिव्यपदं दुरापम् ।। ३२ ।।

प्रजाधिनाथोऽथ बभूव रुद्रो
महान् विजेता द्विषदां दलस्य ।
विधिक्रमादागतराज्यरक्षा-
भारं विवोढुं नितरां समर्थः ।। ३३ ।।

महीभृतोऽन्ये भयमादधानाः
प्रणेमुरागत्य सदा त्रिसन्ध्यम् ।
नतोत्तमाङ्गेन निजानुकूल-
मिमं विधातुं सगणाः सकामाः ।। ३४ ।।

प्रशासतस्तस्य महीं सुबुद्धेः
कालो व्यतीयाय महानविघ्नः ।
ततः स पुत्रार्पितराज्य-भारो
वनं प्रतस्थे विरतो मुमुक्षुः ॥ ३५ ॥

अनन्तरं तत्तनयो गवीशः
कारुण्यपीयूषमुचामधीशः ।
पृथ्वीपतिर्नाम महीमहेन्द्रो
ररक्ष राज्यं निजयाऽऽत्मशक्त्या ॥ ३६ ॥

अप्राप्तकाले युवराजवीर-
भद्रे प्रयाते त्रिदिवं सगर्भाम् ।
विहाय पत्नीं नयनाम्बु मुञ्चन्
शोकाब्धिमग्नो विललाप भूपः ॥ ३७ ॥

किं वच्मि धातस्तव कृत्यगाथां
कारुण्यलेशस्त्वयि कोऽपि नास्ति ।
मामीदृशं चारुदृशापि पश्यन्
चकर्थ हाऽनभ्रपवेर्निपातम् ॥ ३८ ॥

कस्तेऽपकारो मयका व्यधायि
येनात्मजो मेऽपहृतस्त्वयेत्थम् ।
तमन्तरेणाहमसून्न धर्तुं
क्षमोऽस्मि वेधस्तव दुष्कृतेन ॥ ३९ ॥

परस्य रत्नाहरणे महीयान्
पाप्मेति तथ्यं निरगादि शास्त्रैः ।
विधे ! व्यतिक्रम्य नितान्तनिन्द्यं
कृत्यं विधायार्जितमेव पापम् ॥ ४० ॥

क्रतप्रयत्नोऽपि तवावनाय
जातो न चाहं सफलस्तनूज !
तावत्समागत्य करालकालः
प्राणानहार्षीदिह निष्कृपस्ते ॥ ४१ ॥

जरागृहीतं हतभाग्यमद्य
विहाय मां पुत्र ! गतोऽसि कुत्र ।
भविष्यतीयं वसुधाप्यनाथा
त्वया विना जीवनमप्यपार्थम् ॥ ४२ ॥

त्वामन्तरा हा तनुज ! प्रसूस्ते
शोकाग्निदग्धा कुररीविलापा ।
प्रतिक्षणं रोदिति मुक्तकेशा
विच्छायवक्त्राक्षिजलार्द्रदेहा ॥ ४३ ॥

एतां दशां वीक्ष्य कथं न पुत्र !
कृपां विधत्से त्वरितं जनन्याम् ।
नो चेदियं जीवनरिक्तकाया
भविष्यतीति त्वमवेहि नूनम् ॥ ४४ ॥

विना त्वया ते सहचारिणीयं
तपस्विनीवातितरां कृशाङ्गी ।
संयापयेत्केन सुदीर्घकालं
कथं तदेवातितमां दुनोति ॥ ४५ ॥

दशामिमां पश्य, जहीहि निद्रां
महीयसीं बन्धुजनेषु सत्सु ।
पुनः स्वराज्यं रिपुभीतिमुक्तं
भुङ्क्ष्वेति सत्यापय भाषितं मे ॥ ४६ ॥

कालातिथित्वं मयि याति वत्स !
　　को नाम भोक्ता धरणीं सुरम्याम् ।
तच्चिन्तया व्याकुलमानसं मे
　　कथं समेयाच्चिरकालशान्तिम् ।। ४७ ।।

अत्रान्तरे मातृगृहं स्थिताया-
　　श्चिरं गताया युवराजपत्न्याः ।
गर्भात्समुत्पन्नसुतप्रवृत्तिं
　　श्रुत्वा नृपो धैर्यमुदाललम्बे ।। ४८ ।।

लब्ध्वा निदेशं मनुजेश्वरस्य
　　कुमारचन्द्रो नवजातबालम् ।
स्वयं समानेतुमरं प्रतस्थे
　　तन्हीपुरं तच्छिशुमातृगेहम् ।। ४९ ।।

मातामहस्तस्य शिशोर्बलीयान्
　　गोरक्षराज्यं निजराज्यभागम् ।
विधातुकामो नहि तं कुमारं
　　प्रास्थापयत्पितृगृहाऽऽगमाय ।। ५० ।।

विज्ञात-तन्मानस-दुर्विचारः
　　प्रलोभनेनाऽऽशु स भूमिनाथः ।
पौत्रस्य धात्रीं वशगां विधाय
　　पिधाय तं शावकमानिनाय ।। ५१ ।।

कालक्रमेणैधत बालकोऽसौ
　　तातालये शुक्लशशीव नित्यम् ।
पितामहं चान्यसगोत्रबन्धून्
　　प्रसादयामास स बालभावैः ।। ५२ ।।

पश्चादसावेव गतः प्रसिद्धिं
भूपालनाम्नाऽतुलनीयतेजाः ।
जातोऽधिकारी क्षितिपासनस्य
दयार्णवोऽह्नाय युवा महीपः ॥ ५३ ॥

संचालने राज्यविधेरमुष्य
साधीयसीं बुद्धिमवेक्ष्य भूपः ।
निजासने तं प्रविधाय काले
स्वयं शिवाराधनमानसोऽभूत् ॥ ५४ ॥

परस्परं पाटनकाठमाण्डु-
क्षितीशयोर्मल्लजयोर्विवादम् ।
निशम्य सम्प्राप्तनृपासनोऽयं
युद्धाय सैन्याधिपतिं शशास ॥ ५५ ॥

ओजो निजं दर्शयितुं स वीरः
पदातिभिः सार्द्धमुपात्तखड्गः ।
शैलान् समुल्लङ्घ्य पुरं तदीय-
माचक्रमेऽज्ञातपराक्रमोऽरेः ॥ ५६ ॥

रणाजिरेऽस्मिन् बलिनां वरोऽयं
रोषेण रक्ताम्बुजशोणनेत्रः ।
प्रदर्शयामास परात्मशक्ति
[1]समीकयन्निन्द्र इवाहिदैत्यैः ॥ ५७ ॥

निगूढतेजाः परमद्वितीयो
जगज्जयो मल्लकुलावतंसः ।
रुरोध शक्त्या परया तमाशु
भूपालशाहं रणरङ्गधुर्यम् ॥ ५८ ॥

---

१. युध्यन्नित्यर्थः ।

निवारितोऽसौ पुनराहवाय
दुःसाहसं नो विदधे तदानीम् ।
जयोऽजयो वा भवतीह लोके
विधेरधीनो नियतो जनस्य ॥ ५९ ॥

ततः परं युद्धमतिं विहाय
मनोनियुक्तिं विदधत्सुकार्ये ।
प्रजागतं दुःखमशेषमेष
समूलमुन्मूलयितुं प्रयेते ॥ ६० ॥

अगमदमितकालः कुर्वतो राज्यकृत्यं
तनयमुखदिदृक्षोर्भूपतेर्धार्मिकस्य ।
नहि मनसि शमोऽभूत्तस्य चिन्तापरस्य
भवति गतिरसूनोर्नैव यस्मात् परत्र ॥६१॥

इति श्री-पशुपति-कवि-विरचिते नेपाल-साम्राज्योदये
महाकाव्ये चतुर्थः सर्गः ॥



# पञ्चमः सर्गः

अथ भूमिपतिः कनीयसी-
मनुरूपां महिषीं विवेकिनीम् ।
असुतत्वजबाधयान्वितो
रहसि स्वात्मगतं वचोऽब्रवीत् ॥ १ ॥

पुरतस्तव किं वचो ब्रवै
गतजन्मार्जितपापसंचयः ।
मम नेत्रचकोर-चन्द्रिके
सकलं विश्वमिदं न रोचते ॥ २ ॥

असुतत्वजचिन्तयान्वहं
हृदयं मे नितरां विषीदति ।
सुखमप्यसुखायतेऽनिशं
शयनीये शयनं दुरासदम् ॥ ३ ॥

न च राजपदं सुखावहं
सुतरत्नेऽसति मे महीभुजः ।
अमृतं गरलायतेऽधुना
विरहीवानुभवाम्यहं सदा ॥ ४ ॥

असुतस्य मुखावलोकनं
बहुनिन्द्यं भुवनेऽवगम्यते ।
जनताऽपि न तस्य भूभृतो
मुखमालोकयितुं विचेष्टते ॥ ५ ॥

श्रुतमस्ति पुरा त्रिशंकुज-
शिचरकालादनवाप्तनन्दनः ।
तनयावधि न व्यलोकयत्
स्वकमास्यं जनवृन्दसम्मुखे ।। ६ ।।

मम मानसमाकुलं तथा
तनयं सर्वसुखप्रदं विना ।
सरसि स्थितकैरवावलिः
शशिनं नेक्ष्य यथा समाकुला ।। ७ ।।

अहमेव भवे सदुष्कृतो
हतभाग्यः सुतमानसस्पृहः ।
अथवा मम भालपट्टके
किमु नो लाञ्छनिता विधेर्लिपिः ।।८।।

उरसाऽधिगृहीतजन्मना
तनयेनैव विमुच्यते पिता ।
निरयादिति शास्त्र-सम्मतिर्
न च विज्ञैरपलाप्यते क्वचित् ।। ९ ।।

प्रियतामभिवीक्ष्य पक्षिणोः
पृथुके लालन-पालनात्मिकाम् ।
निगमागमतत्त्ववेदिन-
श्चलितं व्यासमुनेर्मनः स्थिरम् ।। १० ।।

अरणेर्मथनात्सुतेजसं
शुकनामानमदभ्रसंविदम् ।
परलोकसुखाकरं सुतं
जनयामास पराशरात्मजः ।। ११ ।।

तदनन्तरमेव मानसं
सुखकल्लोलमयं प्रियास्पदम् ।
बहुशास्त्रविदं विधाय तं
परमां शान्तिमसावुपागमत् ।। १२ ।।

किमु राज्यमिदं गते दिवं
मयि नान्यो ध्रुवमेव भोक्ष्यते ।
प्रदसीयशुचाऽऽकुलं मनः
परितापं सहते दिवानिशम् ।। १३ ।।

मनसा वचनं महीभुजो
महिषी बुद्धिमती निपीय तत् ।
निजगाद सयुक्तिकं वचो
मधुरं स्नेहमयं श्रुतिप्रियम् ।। १४ ।।

वसुधाधिप ! मा कृथाः शुचं
न च धैर्यं सहसा परित्यजेः ।
धृतिरेव गरीयसी स्मृता
विबुधैः शास्त्र-रहस्यवेदिभिः ।। १५ ।।

श्रुतमस्ति मया गुरोर्मुखाद्
रघुवंश्योऽजसुतोऽवनीपतिः ।
गुरुसन्निधिमेत्य तं द्रुतं
परिपप्रच्छ निजानपत्यताम् ।। १६ ।।

ननु कारणमत्र किं भवेद्
यदहं पुत्रपदार्थविच्युतः ।
कृपया वद माऽधुना गुरो !
तदुपायं कलुषावृतं जनम् ।। १७ ।।

इति साश्रु वदन्तमीश्वरं
विनयेनावनतं मनस्विनम् ।
अमृतोपमवाक्यमब्रवीत्
करुणाक्लिन्नमनास्तपोधनः ॥ १८ ॥

अवनीप ! न चिन्त्यतां त्वया
गतशोको भव, ते निकेतने ।
अपि कोऽस्त्यनुभावसंभृतो
भविता कीर्तिकरः सुतोत्तमः ॥ १९ ॥

अधुनैव मयाऽवलोकितं
नृप ! यागेन विना न ते सुतः ।
यदि चात्मभुवं समीहसे
कुरु यागं निगमादिशंसितम् ॥ २० ॥

अजजोऽपि तथा विधाय तं
गुरुवाक्येषु विशेषप्रत्ययः ।
भव-सागर-मग्न-तारकं
तनुजं प्राप जनातिगं शिवम् ॥ २१ ॥

तदुपेहि गुरोर्गृहं द्रुतं
स च नावस्त्ययनाभिदर्शकः ।
नहि भानुमतो विना तम-
स्ततिनाशे भुवि कोऽपि लक्ष्यते ॥ २२॥

प्रिययोदितवाचमाश्रयन्
गुरुवेश्माभिययाविलापतिः ।
प्रणिपातपुरस्सरं वचः
कथयामास विमुक्तमानसम् ॥ २३ ॥

अनिशं व्यथयाऽतिपीडितः
शरणं त्वां समुपागतोऽस्म्यहम् ।
न तिरोहितमस्ति किंचन
श्रुति-शास्त्रार्थ-विशेषवेदिनः ॥ २४ ॥

सुमते ! मम राज्यमद्भुतं
मयि याते ननु को ग्रहीष्यति ।
इति चिन्तनमेव शाश्वतं
बलवन्मां परिबाधतेतराम् ॥ २५ ॥

यदि कश्चिदुपायसम्भवः
प्रतिकारोऽस्ति भवादृशां मतौ ।
कृपया दिश माऽऽशु साम्प्रतं
सुतलिप्सुं दयनीयचेतसम् ॥ २६ ॥

इति राजवचः स्फुटाक्षरं
गुरुराकर्ण्य दयार्द्रमानसः ।
निजगाद महौजसं नृपं
त्यज चिन्तां रूधिरापशोषिणीम् ॥ २७ ॥

बहुधा सुविचिन्त्य निश्चितं
तव पुत्रो भवितेति नानृतम् ।
विधिना लिखितं शुभाशुभं
भुवि भोक्तव्यमिहैव जीविनाम् ॥ २८ ॥

पुरतो यदहं ब्रवीमि ते
कुरु तद् भूप ! विमुक्तचेतसा ।
गतजन्मकृतैनसां चयं
ज्वलनस्तूलमिव प्रधक्ष्यति ॥ २९ ॥

श्रुतसम्मतमाशु सिद्धिदं
सकलाभीष्टकरं पयोव्रतम् ।
विधिना सह भार्ययाऽभयं
कुरु मासावधि भावनान्वितः ॥ ३० ॥

इदमेव पुरा महर्षिणा-
ऽदितिनाथेन विधाय कान्तया ।
समवाप्यनुरूपसन्ततिर्
महनीयाऽतुलनीयविक्रमा ॥ ३१ ॥

गुरुणा प्रतिबोधितो नृपो
बहु विश्वस्य तदुक्तमाचरन् ।
अकृत व्रतमुत्तमं शिवं
सुतविघ्नापहरं दृढात्मना ॥ ३२ ॥

नियमान्तदिने स भूपतिः
श्रुतशास्त्रानवगीतकर्मणे ।
श्रुतिसारविदे द्विजन्मने
पृथिवीं गां कनकं च प्रार्पयत् ॥ ३३ ॥

महिषी नवनीतकोमला
कमलास्या सकलार्थसाधिका ।
प्रियमानसतापहारिणी
शुभलग्नं स्म दिनं प्रतीक्षते ॥ ३४ ॥

व्रतपालनलब्धसत्फला
नृपपत्नी लघु गर्भमादधे ।
प्रतिवासरमेधतैषकः
सितपक्षेन्दुरिवातिसम्भृतः ॥ ३५ ॥

सुषुवे तनयं प्रभाविणं
निजभासा हततिग्मतेजसम् ।
परितोषिततातमानसं
शुभवारान्वितमासि सप्तमे ॥ ३६ ॥

अवगम्य सुतोद्भवं गृहे
नरनाथो धृतधैर्यचेतसा ।
अमृतांशुविलोकनस्पृह-
स्तटिनीनाथ इव प्रसेदिवान् ॥ ३७ ॥

बहवे द्रविणं द्विजन्मने
बहुलं दत्तमनेन भूभृता ।
प्रणिगद्य सुशंसनं मुदा
क्षितिदेवाश्च गृहं प्रतस्थिरे ॥ ३८ ॥

जनुषाऽस्य नृपस्य सद्मनि
प्रतिघस्रं ह्यभवन्महोत्सवः ।
पुरवासिन एत्य सत्कृताः
शुभवादान् व्यतरन्महीभुजे ॥ ३९ ॥

दशमेऽह्नि नृपः पुरोधसा
कृतमाङ्गल्यविधिः प्रसेदुषः ।
नवजातशिशोर्मनोहरं
व्यदधान्नाम शुभंयु सत्प्रियम् ॥ ४० ॥

बालोऽयं कमलाभिरामनयनस्तिग्मांशुतिग्मप्रभो
गौराङ्गो मधुपालिमेचककचः सन्नद्धवक्षःस्थलः ।
पित्रोरक्षिसुखाकरः प्रियतमो बन्धोर्मनोरञ्जनो
विख्यातो जनमण्डले हि पृथिवीनारायणेत्याख्यया ॥ ४१ ॥

इति श्री-पशुपति-कवि-विरचिते नेपाल-साम्राज्योदये
पञ्चमः सर्गः ॥



# षष्ठः सर्गः

[1]रसाब्दकालेऽस्य गुरुर्गरीयान्
गोरक्षनाथोऽयमकल्पतेजाः ।
निर्गत्य दर्या विदितात्मतत्त्वः
समाययौ राजसुतोपकण्ठम् ॥ १ ॥

विशालवक्षःस्थलमायताक्षं
पद्मोर्ध्वरेखाङ्कितपाणिपादम् ।
सुभालमेतं दृढबाहुजानुं
निरीक्ष्य योगिप्रवरो विमुग्धः ॥ २ ॥

अयं शिशुः सर्वविधः सुभाग्यः
सामुद्रिके भाषितसाधुचिह्नः ।
प्रजोपकारी रिपुराशिमर्दी
युवत्वकाले भवितेति नूनम् ॥ ३ ॥

प्रसादमेतं मम चेद् ग्रहीता
वीरप्रकाण्डो बहुराज्यभोक्ता ।
प्रख्यातकीर्तिर्नृपनीतिदक्षो
मन्ये ध्रुवं स्यान्न च संशयोऽत्र ॥ ४ ॥

विचिन्त्य योगिप्रवरः प्रकामं
दधिप्रसादं निजवक्त्रवान्तम् ।
समर्प्य प्रोचे स्वमुखे निधत्स्व
न चिन्तय त्वं किमपीह काले ॥ ५ ॥

---

१. ६ ।

न बालभङ्गोऽपि भवेत्कदाचिद्
युद्धेषु ते नैव च शौर्यहानिः ।
धर्मद्रुहां नाशविधौ प्रवृत्ति-
र्मिथ्याभियोगे मनसो निवृत्तिः ॥ ६ ॥

अबोधबालो गुरुणा प्रदत्तं
प्रसादमैच्छत्स्वमुखे निधातुम् ।
उच्छिष्टमेतं सकलं विदित्वा
न्यपातयत्तं भुवि बाललौल्यात् ॥ ७ ॥

अमुष्य बालस्य नितान्तमौर्ख्यं
दृष्ट्वा गुरुः प्राचकथद्विचेताः ।
अभक्षयिष्यो यदि हार्दतस्त्वं
तदाऽभविष्यत्तव वाक्यसिद्धिः ॥ ८ ॥

ततश्च ते वाचमयत्नसिद्धां
निशम्य भूपा निखिलाः पृथिव्याम् ।
राज्यं स्वकीयं तव राज्यभागं
मुदाऽकरिष्यन् स्वयमेव गत्वा ॥ ९ ॥

नेदं भविष्यत्यधुना परन्तु
प्रसादरूपं दधि लग्नमङ्घ्रौ ।
अतस्त्वया यस्य नृपस्य भूम्यां
प्रस्थास्यते स त्वदधीन एव ॥ १० ॥

इत्याशिषं राजसुताय तस्मै
दत्त्वोपकर्त्री विनिवृत्तरागः ।
अन्तर्दधे योगिवरः प्रबुद्धो
नवाम्बुदैरन्तरितः शशीव ॥ ११ ॥

[1]युग्माब्धिजायेन्दुसमासु धीरो
विवेकशीलो गुणवान् सुबुद्धिः ।
त्रयोदशाब्दीयवयःस्थितोऽयं
नृपासनेऽङ्घ्री न्यदधात्प्रसन्नः ॥ १२ ॥

ततः स सेनापतिकालुशर्म-
मतिं समादाय नृणामधीशः ।
स्वराज्यसीमाततनाय शीघ्रं
कृतप्रयत्नोऽभवदाजिकामः ॥ १३ ॥

परस्परं पाटन-काठमाण्डू-
पुरस्थभूपौ कलहायमानौ ।
विलोक्य राजा रणजीतमल्लः
संकेतयायास महीशमेनम् ॥ १४ ॥

तदाक्रमाय स्वत्रिशालसैन्यैः
सोत्साहमाजौ विहितप्रयाणः ।
नृपस्ततस्त्येन महीश्वरेण
जयप्रकाशेन निरुद्धसेनः ॥ १५ ॥

पराजयेनात्र विमुक्तदृष्टिर्
लुम्जुङ्गदेशाद्यचलीयभूपान् ।
एकत्र सूत्रे सुदृढं निबध्य
शस्त्राणि संचेतुमनाः स जातः ॥ १६ ॥

[2]युगाब्धिजायाद्विजराजयुक्ते
संवत्सरे विश्वजिगीषयाऽयम् ।
जयप्रकाशेन पुना रणाय
गोरक्षसैन्याधिपतिर्जगाम ॥ १७ ॥

---

१. १७४२ ई० ।

२. १७४४ ईस्वीये ।

यदीयतेजोऽसहमान एव
जयप्रकाशस्त्रपया नतास्यः ।
संग्रामभूमिं सहसा विहाय
गुह्येश्वरीस्थानमनुप्रपन्नः ॥ १८ ॥

समीकभूमिं विरहय्य तस्मिन्
पलायिते राजनि खिन्नचित्ता ।
रात्रिन्दिवं साश्रु विचिन्तयन्ती
राज्ञी न लेभे शयनं निशायाम् ॥ १९ ॥

ततश्च साऽत्यन्तमबोधसूनुं
सिंहासनस्थं द्रुतमेव कृत्वा ।
स्वयं स्वराज्यस्य समस्तकार्यं
संचालयामास विवेकपूर्वम् ॥ २० ॥

इतः समासाद्य जयप्रकाशः
सिद्धात्मनः खड्गविशेषमेकम् ।
पुनः स्वराज्यं वशगं चकार
[1]शून्याहिजायाक्षणदेशवर्षे ॥ २१ ॥

तथापि वीरो रणधीरपृथ्वी-
नारायणश्चैव जयी बभूव ।
यतः स तीक्ष्णो [2]दहचोक-लक्ष्मी-
डाण्डादिभागान् स्वबलैर्जिगाय ॥ २२ ॥

अत्रान्तरेऽत्याक्रमणं व्यधत्त
साहाय्यमादाय नृपान्तरस्य ।
गोरक्षराज्ये लुमजुंनरेशो
नानाविधैर्योद्धृविशेषवर्गैः ॥ २३ ॥

---

१. १७५० ईस्वीये ।

२. एतानि प्रदेशनामानि ।

सिंहासचोकाख्यरणप्रदेशे
सैन्यद्वयेऽन्योन्यमतीवयुद्धम् ।
छिन्नानि खड्गेन शिरांसि रेजू
रक्तापगायामिव सारसानि ॥ २४ ॥

अथापि तस्मिन् द्विषतां बलानि
गोरक्षसैन्याभिमुखं न तस्थुः ।
शेषाणि शस्त्राणि विहाय प्राणान्
संरक्षितुं जग्मुररण्यकोणे ॥ २५ ॥

[1]अनीककामो दृढचित्तशक्ती
रणोत्तमो मल्लजयप्रकाशः ।
निवारितोऽसावपि साहसं नो
जहौ कदाचिद् विधुरेऽपि काले ॥ २६ ॥

अतीवनिर्भीकमनाः प्रवीरः
सेनां समादाय स भारतीयाम् ।
गोरक्षदेशं प्रति निर्जगाम
पुनः सकोपः समराय शीघ्रम् ॥ २७ ॥

निरस्तधैर्यं करुणाविहीनं
खड्गोत्थसंरावविनष्टकर्णम् ।
युद्धं तयोर्जातमभूतपूर्वं
सुरासुराजिं स्मरतीव नूनम् ॥ २८ ॥

प्रवर्तमाने तुमुले [2]समीके
कियद् बलं कालगृहं प्रयातम् ।
कियच्च लूनाङ्घ्रिकरं पृथिव्यां
पपात तातेत्यसकृद् ब्रुवाणम् ॥ २९ ॥

---

१. युद्धकामः ।
२. युद्धे ।



श्री ५ महाराजाधिराज पृथ्वीनारायण शाह

चमूपतिस्तस्य नितान्तवीरो
योद्धा महानाहवलब्धकीर्तिः ।
अरातिखड्गाभिहतो जगाम
परेतराजो भवनप्रघाणम्[1] ॥ ३० ॥

सेनापतिर्वीरगतिं प्रयातः
प्रयुध्यमानो रिपुभिः सधैर्यः ।
इति श्रुतिस्तस्य मनः सकोपं
राजाधिराजस्य चकार सद्यः ॥ ३१ ॥

रक्तास्यनेत्रः स्वयमेव गत्वा
सुतीक्ष्णखड्गानभिचालयन्त्सः ।
अनीकभूमौ बहुसांयुगीनो
गतः क्व मूढेति वदन्नतिष्ठत् ॥ ३२ ॥

आदाय खड्गं समरे स्थितं तं
विलोक्य तत्सैन्यमतीव भीरु ।
हता वयं पालय पालयेति
ब्रुवज्जहौ शीघ्रतयाऽऽजिलीलाम् ॥ ३३ ॥

केचिद् भटास्तेऽवदसीयखड्ग-
प्रहारमासोढुमशक्नुवन्तः ।
इतस्ततो नेशुरहो कुरङ्गो
मृगेन्द्रतेजः सहते कदापि ॥ ३४ ॥

इतो महीपालमणिः स पृथ्वी-
नारायणो नैजबलैः समेतः ।
अनेकभागानधिकृत्य तस्य
स्वकीयराज्यावयवान् व्यधत्त ॥ ३५ ॥

---

१. बहिर्द्वारम् ।

ततोऽधिराजो मकवान्पुरस्थं
दिग्बन्धनं विश्रुतचण्डकृत्यम् ।
वरुथिनीबद्धमसाधुभूपं
कर्तुं स्वपक्षे विधिना प्रयेते ॥ ३६ ॥

परं त्वमात्यः कनकस्तदीयः
शौर्यादिबाहुल्यविशेषगर्वः ।
नानाप्रयासैरपि नो गृहीतः
प्राप्ताश्रयो बङ्गवराधिपेन ॥ ३७ ॥

गौराङ्गसेनाक्रमणस्य भीत्या
सम्बाधकालः समुपस्थितोऽस्य ।
अतः स नैजात्महिताय वाचा
बद्धोऽभवत्तस्य सहायतार्थम् ॥ ३८ ॥

[1]गुणश्रुतद्वीपतमीनवर्षे
[2]नभोरसानीकसहस्रमाशु ।
सम्प्रेष्य योद्धुं मकवानपुर्यां
गोरक्षसैन्यैरदिशत् स दुष्टः ॥ ३९ ॥

गोरक्षसैन्यानि समागतांस्तान्
परः सहस्रं दृढयोद्धृवर्गान् ।
सम्प्रेषितान् बङ्गनराधिपेन
दन्तैःस्वदन्तान् पिपिषुर्निरीक्ष्य ॥ ४० ॥

वीराः प्रवीरा धृततीक्ष्णशस्त्राः
श्रीरामकृष्णाद्यधिनायकत्वे ।
गुरुं स्मरन्तो मकवानपुर्यां
प्रतस्थिरे पञ्चमुखप्रणादाः ॥ ४१ ॥

---

१. १७६३ ईस्वीये ।

२. ६० सहस्रम् ।

अद्रिप्रदेशाहवशून्यप्रेक्षा
अज्ञातमार्गा यवनीयसेनाः ।
तत्संमुखे स्थातुमशक्नुवन्त्यः
प्रादुद्रुवन्नाजिभुवं विहाय ।। ४२ ।।

शस्त्राण्यनेकानि जयेऽप्यमुष्मिन्
लब्धानि गोरक्षबलैर्महान्ति ।
मध्ये च लुञ्जुंनृपतेः प्रभावं
सूरप्रतापो विफली चकार ।। ४३ ।।

[1]वेदारिजायाहिमरश्मिसङ्ख्ये
संवत्सरे भूमिपतिः सकोपः ।
नारायणः कीर्तिपुरं रुरोध
गृहीतशस्त्राभिरनीकिनीभिः ।। ४४ ।।

पक्षद्वयानीकगणोऽदसीयान्
वर्षाणि यावच्चतुरः प्रभागान् ।
हठादरौत्सीत्परमुग्रतेजा-
स्तत्सैनिकः प्राहरतैव दुर्गात् ।। ४५ ।।

युद्धावसाने विवशस्तदीयो
महीपतिस्त्यक्तसमस्तशस्त्रः ।
गोरक्षसैन्याधिपतेः समक्षे
नताननोऽह्नाय समर्पितात्मा ।। ४६ ।।

ईस्वीयवर्षे वसुशत्रुजाया-
चन्द्रे[2] तिथौ कालधने[3] मघोनः ।
यात्रोत्सवे स्वीयसमस्तसेना
आकारयामास जयप्रकाशः ।। ४७ ।।

---

१. १७६४ ईस्वीये ।
२. १७६८ ई० ।
३. २८ ।

चम्वां प्रसिद्धे हनुमानढोका-
ऽभिधानदेशे समुपागतायाम् ।
रिक्तं बभूव स्वयमेव काठ-
माण्डूपुरं काष्ठकलाप्रसिद्धम् ॥ ४८ ॥

एतत्सुजातं रुधिरप्रपातं
विनैव गोरक्षबलाधिकारे ।
वृत्तान्तमेनं क्षितिपोऽवगम्य
परां मुदं प्राप पराभिजिष्णुः ॥ ४९ ॥

इतो महीपौ नरसिंहमल्लो
जयप्रकाशश्च पलायमानौ ।
त्रपान्वितौ भक्तपुरं प्रविश्य
सर्वं त्यजन्तौ शरणं प्रपन्नौ ॥ ५० ॥

इत्थं दिनेऽल्पीयसि काठमाण्डू-
पुरे तथा पाटननामपुर्याम् ।
चकार वीरो नरराजपृथ्वी-
नारायणः साधुतयाऽऽधिपत्यम् ॥ ५१ ॥

खिष्ट्रीयवर्षे विधुसप्तनारी-
सुधांशुसङ्ख्ये[1] रणजीतराज्यम् ।
ग्रहीतुकामान् [2]मुनिजारपुत्रान्
चक्रे स्वपक्षे नयवित्स भूपः ॥ ५२ ॥

आचक्रमे भक्तपुरं ततः स
ते जारपुत्रा बलिनस्ततस्त्यम् ।
शस्त्रालयं सर्वविधं समर्प्य
जाताः कृतज्ञाः समरानभिज्ञाः ॥ ५३ ॥

---

१. १७७१ ई० ।
२. ७ जारपुत्रान् ।

भयंकरेऽस्मिन् समरे क्षताङ्गो
जयप्रकाशो नितरां बभूव।
विरामकालेऽपि खरप्रतापो
नह्यात्मनो गौरवमत्यजत्सः ॥ ५४ ॥

पृष्टो मुहुस्तेन जिगीषुणाऽयं
संग्रामशूरो रजतस्य पात्रे।
जलं पवित्रं गिरिशाय दत्त्वा
सम्प्रार्थयामास महीपचिह्नम् ॥ ५५ ॥

पूर्णान्त्यलिप्सः स च विष्णुमत्या
गभीरनीरेऽङ्घ्रियुगं सरोजम्।
निधाय खण्डे दृषदः शरीरं
जपन् शिवेति प्रजहावनित्यम् ॥ ५६ ॥

गौराङ्गजातेरतिशात्रवोऽयं
प्रजाधिनाथो महनीयकीर्तिः।
इह स्थितान्नीचप्रचारकर्तॄन्
द्रुतं स्वदेशाद् बहिरेव चक्रे ॥ ५७ ॥

ततः सुरम्यां निजराजधानीं
गोरक्षदेशादपनीय तूर्णम्।
प्रकल्पयामास स काठमाण्डू-
पुरं महीपो बलशत्रुतेजाः ॥ ५८ ॥

इत्थं स भूपो बहुलान्महीपान्
विजित्य नैजेन पराक्रमेण।
नेपालदेशस्य महाधिराजो
दिलीपजन्मेव बभूव सद्यः ॥ ५९ ॥

मेचीमारभ्य कालीं सकलजननुतां यावदुर्वीं सुशासत्
निष्कण्टां पर्वतालीविविधवनयुतां भोगिनां वासयोग्याम् ।
तीर्थस्थानादिरम्यां द्विजगणसहितो राजराजः स राजा
नानाराजेन्द्रमौलिस्थितमुकुटकरद्योतिताङ्घ्री रराज ॥ ६० ॥

इति श्री पशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये

॥ षष्ठः सर्गः ॥



# सप्तमः सर्गः

अथाधिराजः स्थिरशान्तमानसो
नवीनराज्यावनगाढचिन्तनः ।
गुरोः पदाम्भोजमनारतं स्मरन्
[1]वृषासनस्थोऽभवदच्युतोपमः ॥ १ ॥

स राज्यशान्त्यै नयविज्ञमन्त्रिणा
परस्परं मन्त्रयति स्म सस्पृहः ।
बिलाद् विनिर्गत्य महीपसन्निधौ
तदैव योगी गुरुवर्य आगतः ॥ २ ॥

समागतं वीक्ष्य गुरुं कृपालयं
महोच्चपीठादुदतिष्ठदानतः ।
रराज तस्मिन् समये शिलोच्चयाद्
विभास्वदुष्णांशुरिवावनीपतिः ॥ ३ ॥

ततो नृपोऽपेतसमस्तविक्रियो
गुरुं महायोगिवरं दयानिधिम् ।
करौ गृहीत्वा मृगचर्मशोभिते
शुभासने चारुतया न्यवीविशत् ॥ ४ ॥

स तस्थिवांसं पुरतो महीभृतं
सुधांशुगौरैश्चरितैर्महोज्ज्वलम् ।
अरोगमापृच्छदिमं महौजसं
मुहुर्मुहुर्नीतिपथानुयायिनम् ॥ ५ ॥

---

१. वृषः धर्मः ।

कृताञ्जलिर्वाचमुवाच निर्व्यथः
प्रजाधिनाथो महसा विभासितः ।
दयानिधेस्ते कृपया महीयसो
निरन्तरायोऽस्मि सदा निरामयः ।। ६ ।।

तवावलोकेन समस्तकिल्विषं
गतं मदीयं गतजन्मसंचितम् ।
भवेऽप्यमुष्मिन् भवितैव मङ्गलं
सतां हि संगो न कदाप्यभावुकः ।। ७ ।।

इदं सुराज्यं बहुराजशासितं
मयोपलब्धं नितरां निरापदम् ।
कृपाप्रसादेन तवैव चाशिषा-
न चास्त्यमुष्मिन् मम कोऽपि विक्रमः ।। ८ ।।

यथार्जुनो वासवतुल्यविक्रमो
निमित्तमात्रं वरदस्तु माधवः ।
तथैव चाहं गुरुवर्य ! साम्प्रतं
विनाऽऽशिषा ते ननु कर्तुमक्षमः ।। ९ ।।

त्वदब्जपादार्पणपावितं पदं
सुशोभितं मे नितरां गुणान्वितम् ।
प्रसन्नचेताः कृतकृत्यतां गतो-
ऽस्म्यहं नियत्यैव हि योगिदर्शनम् ।। १० ।।

यथाऽग्रियो वायुसुतस्य पौरवो
महात्मनो धौम्यमुनेर्निदेशतः ।
पुरा सुशासत्पृथिवीं महीयसीं
बभूव लोके नितरां यशोधरः ।। ११ ।।

तथा सुबुद्धे ! भगवन्निमां क्षितिं
त्वयोपदिष्टेन नयेन मञ्जुना ।
अवंस्त्रिलोक्यां बहुकीर्तिभाजनं
भवेयमित्येव मनोमनोरथः ॥ १२ ॥

इति ब्रुवन्तं निजगाद स व्रती
महीपमेनं नयगर्भितं वचः ।
महीपते ! भावुकमुत्तरोत्तरं
समेधतान्ते प्रथमं ममाशिषा ॥ १३ ॥

मदीयवाचं परमां हितैषिणी-
मनन्यचेता नृपते निशामय ।
भवद्वयस्यापि नितान्तसाधिका
परं शिवं याऽनुपलं विधास्यति ॥ १४ ॥

यदीयराज्येऽस्ति न कोऽप्युपद्रवः
प्रसादमाप्नोति सदा प्रजाजनः ।
स एव भूपो भुवने प्रशस्यते
सुधांशुसत्कीर्तिमुपैति निर्भयः ॥ १५ ॥

अधिष्ठितो यो नृपतिर्नृपासने
करोति नो न्यायमृतं प्रजाजने ।
अतीवनिन्द्यः परलोकगोऽपि स
नितान्तमाप्नोत्यसुखाकरं फलम् ॥ १६ ॥

महीयसोद्योगबलेन भूपते !
त्वयोपलब्धं नवराज्यमद्भुतम् ।
तथाऽभ्युपायः करणीय आत्मना
यथा भवेन्नो परहस्तितं पुनः ॥ १७ ॥

महीभृता लोकमनोऽभिरञ्जने
कदापि कार्या न च हेयशेमुषी[1] ।
करोति यो भूप ! तथाविधां यदि
स गर्हणीयो भवतीह संसृतौ ॥ १८ ॥

न बुद्ध्यसे किं रघुवंशदीपकः
कृशानुतेजा जितदैवशात्रवः ।
अनिन्दितां गर्भभरालसां प्रियां
जहौ परं नो जनताभिरञ्जनम् ॥ १९ ॥

तथा विधेयं क्षितिपेन शासता
न येन तस्याचरणं कलङ्कितम् ।
[2]समज्ञया चन्द्रसमानया जगत्
सितं विधातुं यतनीयमञ्जसा ॥ २० ॥

हिरण्यरेता वसुधासुधाशनो
विगर्हणीयो न कदापि भूभृता ।
न चेत्समस्तक्षितिपालसन्तते-
र्विनाशबीजं भवतीति निश्चितम् ॥ २१ ॥

यदीयराज्येऽमहनीयपूजनं
भवेन्न पूजा महनीयसंहतेः ।
तदाऽवगन्तव्यमिति व्यतिक्रमे
भवेयुरन्ये विविधा उपद्रवाः ॥ २२ ॥

प्रजागृहीतं द्रविणं धनार्चिता
महीभृतः सच्चरिता दयालवः ।
सदा ददीरन् जनताभिवृद्धये
प्रजासमूहेष्वनुभावकामिनः ॥ २३ ॥

---

१. वुद्धिः ।
२. कीर्तिः

विजित्य योऽन्तःस्थमदादिशात्रवं
जहात्यहंकारमुपागतं बलम् ।
अभेदभावं जनयन् स भूमिपो
विशालचेता जगति प्रशस्यते ॥ २४ ॥

विमृश्यकारी भवतीह यो नृपः
सदा गुणानाश्रयते न निर्गुणान् ।
न वा कठोरो न नितान्तकोमल-
स्तमेव लक्ष्मीर्वृणुते निरापदम् ॥ २५ ॥

कदापि हेयो न सतां सुसङ्गमः
सदानुगम्यः कुलधर्म आत्मना ।
जनेषु पुत्रेष्विव साधुभावना
प्रदर्शनीयाऽवनिपैर्महत्तमैः ॥ २६ ॥

इतीरयित्वा समुपात्तसत्क्रिये
गतेऽथ तस्मिन् निजधाम योगिनि ।
महीपतिः स्वासनमेत्य मन्त्रिणा
विचिन्त्य तं वाचमवोचत प्रियाम् ॥ २७ ॥

मदीयवाचो निखिले प्रमण्डले
महानकैस्तारखैः प्रचारयेः ।
निदेशरक्षाव्रतिनो मम प्रियाः
समस्तकार्येषु सदा विनिर्भयाः ॥ २८ ॥

न मद्यपानं न विधर्मसेवनं
न चौर्यवृत्तिं न परस्वसंग्रहम् ।
न कोऽपि दाराहरणं समाचरेत्
तथा सति स्याद् बहुदण्डभाजनम् ॥ २९ ॥

मदीयराज्ये [1]सुकृतं सनातनं
द्विजातयो ब्रह्मसमानभागिनः ।
न तेऽवमान्याः शयनेऽपि मानवैर्
विशारणार्हा जननी न चार्जुनी[2] ॥ ३० ॥

समस्तवर्णा मम राज्यवासिनः
स्वजातिकर्माणि न जह्युरात्मना ।
न चेद्धठात्कर्कशदण्डभागिनो
भवेयुरस्मिन् मम नो द्विभाषितम् ॥ ३१ ॥

इति प्रधानेन प्रगृह्य वाचिकं
गतं ततोऽरं निजकार्यसिद्धये ।
इतो महीपो मृगयाभिलाषुको
द्विपं समारुह्य जगाम काननम् ॥ ३२ ॥

भटास्तु केचिद्धयपृष्ठगामिनः
पदातयोऽन्ये प्रबलात्मशक्तयः ।
परे च नानाविधशस्त्रचालने
सुदीक्षितास्तं परितोऽनुपेदिरे ॥ ३३ ॥

पिपासयाऽत्यन्तविखिन्नमानस-
स्तरोरधस्तादुपविश्य भूमिपः ।
सुषीमपानीयमतीव निर्मलं
निपीय पेदे विपिनं भयानकम् ॥ ३४ ॥

नदीप्रतीरे शकलं सिताश्मनो
निरीक्ष्य निर्बाधनिराकुलात्मना ।
प्रशंसता प्राकृतरामणीयकं
न्यधायिषातां चरणौ महीभुजा ॥ ३५ ॥

---

१. धर्मः । २. गौरिति ।

निसर्गरम्या झरिणी तरङ्गिता
सवारिजा मन्द्ररवा सुदर्शना ।
सरोजनेत्रेव नवीनयौवना
नितम्बिनी तस्य जहार मानसम् ॥ ३६ ॥

क्षणं विरम्य स्फटिकेन्दुनिर्मले
महोपले स्निग्धमयेऽवनीपतिः ।
तरङ्गिणीजाततरङ्गमैक्षत
हसन्तमुच्चैर्गतिमर्वतां रवेः ॥ ३७ ॥

गिरिप्रवाहैः क्वचिदिङ्गुदीतरुर्
निषिक्तमूलः कुसुमानि सन्ततम् ।
विकीर्य तस्मिन्नृपतौ निजेच्छया
चकार सत्कारमुदात्तमानसः ॥ ३८ ॥

इतस्ततस्तं विहरन्तमुत्सुकं
मनोहरं गन्धमनेकपुष्पजम् ।
प्रसारयञ्छीतलरम्यशीकरैः
सदागतिः सच्चरितं न्यषेवत ॥ ३९ ॥

तदन्तरेऽन्वेषणलीनचेतसः
समागतानाशु समस्तसैनिकान् ।
अनेकधाऽऽखेटविधौ पटीयसः
स आदिशन्मोहनतीर्थमञ्चितुम् ॥ ४० ॥

चलन् स गोप्ताऽरुणरश्मितापजै-
र्भृतो निदाघोदकबिन्दुमौक्तिकैः ।
विलङ्घ्य मार्गं [1]वसुयोजनात्मकं
जगाम तत्तीर्थमतीवपुण्यदम् ॥ ४१ ॥

---

१. ८ योजनानि ।

सुधांशुगौरामृतमेनसो हरं
विशालकायं सखगं सवारिजम् ।
निरीक्ष्य नृणामधिपः सरोवरं
वगाहितुं तत्सलिले मनो दधे ॥ ४२ ॥

भ्रमन् भ्रमंस्तावदसीमविक्रमो
वनाद् विनिर्गत्य करालविग्रहः ।
मृगाधिराजो नरमांसलोलुपो
ननाद तारं मनुजेशसन्निधौ ॥ ४३ ॥

निरस्त्रपाणिः प्रबलोऽपि भूमिपो
न कर्तुमीशः किमपीह तत्क्षणे ।
बलाभिमानाहतबुद्धिवैभवो
न चाजुहावास्त्रकरा वरूथिनीः ॥ ४४ ॥

प्रयुध्यमानस्य समं मृगारिणा
कृतान्तकालाग्निनिभस्य भूभुजः ।
गता मनाङ् नो हृदयस्य धीरता
भवन्ति नो सत्पुरुषा हि कातराः ॥ ४५ ॥

कलाष्टकं यावदहो परस्परं
भुजप्रहारैरभवद् भयानकः ।
रणः, परं क्रोधविमूर्च्छितो हरि-
स्तदीयकायं विदधे नखक्षतम् ॥ ४६ ॥

तदाहतो नश्वरपाञ्चभौतिकं
शरीरमेतद् विजहन्नराधिपः ।
विभिद्य मार्तण्डविशालमण्डलं
जगाम सौरेशपदं निरापदम् ॥ ४७ ॥

गतवति नरनाथे दिव्यलोकं विशोकं
पतिविरहकृशानुप्रज्वलत्क्षीणकाया ।
नयनयुगलनिर्यद्वारिधारानिषिक्ता
सह नृपतिचिताभिः सत्यभूद्राजपत्नी ॥ ४८ ॥

इति श्री-पशुपति-कवि-विरचिते नेपाल-साम्राज्योदये महाकाव्ये
सप्तमः सर्गः ॥



## अष्टमः सर्गः



गते च तस्मिन् मनुजाधिनाथे
त्रिविष्टपं भौतिकवर्ष्म हित्वा ।
सिंहप्रतापस्तनयस्तदीयो
नृपासनस्थो विधिवद् बभूव ॥ १ ॥

[1]वेदर्षिजायेन्दुमिते शुभाब्दे
सम्प्राप्तराज्यो जनताभिनन्द्यः ।
लोकोपकाराय स धर्मशाला-
निर्माणकार्यं प्रथमं व्यधत्त ॥ २ ॥

आदर्शपित्रोः स्मरणेऽतिरम्यं
निर्मापितं मन्दिरमौड्यमेकम्
पापान्तकारि त्रिपुरेश्वरस्य
राज्ञाऽमुना मातृसतीस्थलेषु ॥ ३ ॥

अमुष्य पित्रा सदृशं प्रतापं
पराक्रमं चात्यवलोक्य लक्ष्मीः ।
चलापि तं योग्यपतिं विहाय
नान्यं वरीतुं व्यदधान्मनीषाम् ॥ ४ ॥

---

१. १७७४ ई० ।

यशस्विनाऽनेन पराक्रमेण
नेपालपालेन धराधिपेन ।
चमूसहस्रैरभितो निरुध्य
मोरङ्गभूपः सहसा विजिग्ये ॥ ५ ॥

[1]मुनीन्दुवाराक्रमणेन तेन
दृढप्रतिज्ञेन महौजसेदम् ।
साफल्यमाप्तं भुवि लोकगेयं
वीरप्रतिज्ञा न भवत्यपार्था ॥ ६ ॥

इत्थं महीपा निजराज्यसीमा
विस्तारिताऽऽसिक्कमराज्यसीमम् ।
नाल्पो जयस्तस्य विशुद्धवृत्तेः
प्रजापतेः सिक्कमराज्यलिप्सोः ॥ ७ ॥

अपूर्णलिप्सः प्रतिकूलभावाद्
विधेर्नृपोऽयं बहुगीतकीर्तिः ।
[2]नागर्षिजायाद्विजराजसङ्ख्ये
खिष्टीयवर्षे त्रिदिवं जगाम ॥ ८ ॥

ततः परं तस्य रणेतिपूर्वो
बहादुरो नाम सुतोऽवयस्कः ।
सुसम्मतोऽशेषजनैरनिन्द्यः
पित्रासने स्वीयपदं न्यधत्त ॥ ९ ॥

मातैव संचालयति स्म राज्यं
राजेन्द्रलक्ष्मीः प्रखरोपलब्धिः[3] ।
संरक्षकस्तस्य पितृव्यपादो
बहादुरो नाम तु नाममात्रम् ॥ १० ॥

१. १७ । २. १७७५ ई० । ३. उपलब्धिः बुद्धिः ।

वर्षाणि यावद्दश तादृगेव
प्रबन्धकार्यं चलति स्म तस्य ।
अत्रान्तरेऽशान्तिरभून्न काचित्
क्षमैव सर्वत्र प्रधानरूपा ॥ ११ ॥

संरक्षकोऽसौ मम पुत्रराज्यं
ग्रहीतुकामो मनसेति बुद्ध्वा
राजेन्द्रलक्ष्म्यैष महीपमात्रा
निष्कासितोऽन्यत्र बहिर्जगाम ॥ १२ ॥

दिवं गतायां समये जनन्यां
नवीनभूपोऽनलदिव्यरूपः ।
ताताभिलाषस्य सुपूर्तिकामो
राज्याभिवृद्धयै मनसाऽयतिष्ट ॥ १३ ॥

दामोदरं प्रौढमतिं वरिष्ठं
प्रज्ञावतां नीतिविशेषदक्षम् ।
सर्वात्मना मन्त्रितया नियोज्य
राज्यं स संवर्धयितुं ववाञ्छ ॥ १४ ॥

अत्रान्तरे तस्य पितुः कनीयान्
बहादुरोऽयं पुनराजगाम ।
प्रलोभ्य पाल्पावनिपं स वीरो
जिगाय लुम्जुंसहितान्यभागम् ॥ १५ ॥

तत्रैव वर्षे पुनरेव सोऽयं
सन्तापिताशेषसपत्नवर्गः ।
तन्होप्रदेशानधिकृत्य तस्य
कामारिदत्तं क्षितिपं जघान ॥ १६ ॥

तद्राज्यमारभ्य ततः किरात-
सोमेश्वरौ यावदसौ बलीयान् ।
जयध्वजान्दोलनतर्पितेनः[1]
पुनश्च योद्धुं व्यदधात्प्रयासम् ॥ १७ ॥

[2]कालार्कजद्वीपसुधांशुवर्षे
बहादुरोऽ[3]ष्टेन्दुसहस्रसेनाः ।
नीत्वा समं सिक्कमराजधानीं
रुरोध शक्त्याऽतुलयाऽऽजिगृध्नुः ॥ १८ ॥

स्वल्पे रणे प्राच्यप्रतीच्यभागौ
जितौ समस्तौ बलिशात्रवेन ।
ज्ञात्वेति तस्यावनिपोऽभिशोचन्
चीनं ययाचेऽधिकसैन्यशक्तिम् ॥ १९ ॥

परं न साफल्यमवाप्य तेन
वशंगतेनाल्पबलैर्विरामे ।
गोरक्षभूपेन समं सुषन्धिः
कृतः स्वराज्यस्य सुरक्षणाय ॥ २० ॥

सन्ध्युत्तरं सिक्कमवासिलोकान्
गोरक्षसेना बहुशो व्यलुण्ठन् ।
अमानवीयव्यवहारमासां
विलोक्य राज्ञो हृदयं विशीर्णम् ॥ २१ ॥

ततः स तद्रोधकृतेऽनुवारं
सम्प्रार्थितोऽपि श्रुतवान्न किंचित् ।
त्रिविष्टपे संस्थिततन्मनुष्यान्
तदा व्यशात्तस्य धराधिनाथः ॥ २२ ॥

---

१. इनः प्रभुः । २. १७८८ ई० । ३. १८ ।

आकर्णयन्नेव प्रवृत्तिमेतां
गोरक्षराजो विजयाभिलाषी ।
त्रिविष्टपीयैः सह युद्धघोषं
चकार बम्शाहचमूपतित्वे ॥ २३ ॥

सीमानमाक्रम्य तयोर्द्वयोश्च
सामान्यमेवातितरां ह्रसीयः ।
बभूव युद्धं तुमुलं समन्ताद्
गोरक्षसेनैव जिगाय तस्मिन् ॥ २४ ॥

त्रिविष्टपीयाः सकलाः सुसेनाः
कुरङ्गदेशं शरणं प्रपन्नाः ।
तत्रापि युद्धे भयकातरास्ता
गोरक्षसैन्याभिमुखे परास्ताः ॥ २५ ॥

बभूव सन्धिः समरावसाने
परस्परं प्रेममयो विवेकः ।
न जातु काले कटुतानुभूतिर्
गमागमे नाप्यवरोध एव ॥ २६ ॥

[1]सुधांशुभाग्यर्षिहिमांशुवर्षे
चीनाधिपोऽ[2]श्वर्षिसहस्रसैन्यम् ।
नेपालराज्याक्रमणाय शीघ्रं
सम्प्रेषयामास बलाभिमानः ॥ २७ ॥

फुकुङ्गनामा रणचातुरीज्ञः
सेनापतिः ख्यातयशा बलीयान् ।
तासां करोति स्म चमूपतित्वं
समागतानां निजवाहिनीनाम् ॥ २८ ॥

---

१. १७९१ ई० । २. ७० सहस्रम् ।

दिशाऽस्य दामोदरनामधेयः
सैन्याभिसंचालननीतदाक्ष्यः ।
तां रोद्धुकामः पृतनाधिनेता
प्रगृह्य सैन्यानि चचाल युद्धे ॥ २९ ॥

अनल्पसेनां प्रविलोक्य चैनीं
व्यचीचरत्सैन्यपतिः स्वचित्ते ।
नैतत्पुरः स्थास्यति मेऽल्पसैन्य-
मतः प्रयोज्या लघुकूटनीतिः ॥ ३० ॥

तत्सैन्यनेतुः सविधेऽतिदक्षं
सम्प्रेषितं मन्त्रिचतुष्टयं च ।
सन्ध्यर्थमेतेन, तदाक्रमाय
स्वयोद्धृसैन्यं समदिश्यतेतः ॥ ३१ ॥

सेना तु चैनी जलमन्तरेण
प्रागेव वैकल्यमतीव नीता ।
तथापि युद्धं करुणाविहीनं
प्रारब्ध सा वेत्रवतीप्रतीरे ॥ ३२ ॥

चीनस्य सैन्याधिपतिः फुकुङ्गो-
ऽमुष्मिन् प्रहारे प्रविहाय धैर्यम् ।
जघान सैन्यं निजमेव शस्त्रैः
करोति किं किं न प्रनष्टबुद्धिः ॥ ३३ ॥

व्युच्छिन्नपादाऽधिकचीनसेना
कृतान्तसद्मातिथितां प्रयाता ।
अन्ते च वैवश्यमवाप्य चैनः
सम्राट् चकार प्रणतोऽनु सन्धिम् ॥ ३४ ॥

[1]पृदाकुभाग्यर्षिविधौ नरेशो
युवानमात्मानमथो प्रघुष्य ।
बन्धालये न्यस्य पितृव्यपादं
पाणावनैषीत्समराज्यसूत्रम् ॥ ३५ ॥

द्विजातिकन्यां मिथिलाभिजाता-
मतीवसौभाग्यवतीं विदित्वा ।
तल्लग्नचेता मदनातुरोऽय-
माकारयामास बलान्निशान्ते ॥ ३६ ॥

पाणिग्रहं वाञ्छसि सुन्दरि त्वं
राजाधिराजेन मया समं किम् ।
पृष्टा सती सा निजगाद युक्त्या
मच्छुल्कपूर्तिर्यदि भूपते ! स्यात् ॥ ३७ ॥

किमस्ति शुल्कं भण विप्रकन्ये !
पूर्णं विधास्ये न ममानृता वाक् ।
वाग्बन्धनं तस्य निशम्य रामा
निःशंकमाभाषत मैथिली सा ॥ ३८ ॥

मद्गर्भजातो भवदासनं चे-
दासादयेत्तर्हि भवद्वचो मे ।
स्वीकार्यमेवावनिपाल नून-
मोमित्युवाचाथ नृपोऽपि बद्धः ॥ ३९ ॥

वेदोक्तरीत्या शुभलग्नकाले
पाणिग्रहोऽमन्दसुखानुभूतिः ।
तत्कन्यया भूमिपतेर्बभूव
परस्परप्रेमकरोऽग्निसाक्षे ॥ ४० ॥

---

१. १७९५ ।

तस्यां महीशो रमणीयरूपं
सम्प्राप्तवानात्मजरत्नमेकम् ।
प्रतिश्रुतिं संस्मरतश्च तस्य
तद्यौवराज्याय मनोऽभिलाषः ॥ ४१ ॥

वर्षद्वयानन्तरमेव राज्ञी
सरोजिनी मैथिलकन्यका सा ।
विस्फोटकव्याधिनिरस्तधैर्या
चक्रे कृपाणेन निजात्महत्याम् ॥ ४२ ॥

मनोऽनुरूपा सहचारिणी मे
प्राणप्रियैकान्तविचारदात्री ।
कृतात्महत्येति निशम्य राजा
विचारमूढो विललाप मत्तः ॥ ४३ ॥

नवोद्भवं कायभवं विहाय
गता क्व नीलोत्पलचारुनेत्रे ! ।
त्वामन्तरा हा शरदिन्दुवक्त्रे !
प्राणान् कथं धर्तुमहं समर्थः ॥ ४४ ॥

हा सुन्दरि ! त्वामविलोक्य चेतः
सदा वियोगानलदह्यमानम् ।
मदीयमेतन्न कदापि शान्ति-
मालप्स्यते खञ्जनगञ्जनाक्षि ! ॥ ४५ ॥

रे दुष्टमृत्यो ! तव किन्न लज्जा
मितान्तदुर्बोधशिशुं विलोक्य ।
यस्त्वं विधायातिजघन्यकर्म
कलङ्कितं हंसकुलं चकर्थ ॥ ४६ ॥

अजातदन्तं शिशुमद्वितीयं
शोकातुरं मां च निरीक्ष्य शीघ्रम् ।
अयि प्रिये ! नो दयसे किमर्थं
न ज्ञायते किं तव मानसेऽस्ति ॥ ४७ ॥

विद्यां यदि त्वं प्रणयाभिलिप्सुं
विहाय मां यास्यसि देवलोकम् ।
तदाग्निसाक्ष्ये चिरसङ्गिनीं त्वां
विधाय कुर्यां प्रणयं किमर्थम् ॥ ४८ ॥

प्रजापते ! हा मम रत्नरूपा-
मात्मप्रियां सर्वरसानुकूलाम् ।
दत्त्वाप्यहार्षीः कथमस्तभाग्ये
का का हि नायात्यचिरं विपत्तिः ॥ ४९ ॥

यदर्थमद्यापि समर्प्य सर्व-
ममन्दमोदानुभवं चकार ।
तामन्तरा जीवनसङ्गिनीं स
प्राणान् कथं धारयतीति चित्रम् ॥ ५० ॥

इत्थं महीपो विलपन्नितान्तं
शोकाकुलो नष्टविवेकशक्तिः ।
राज्या महत्याः सदनं समेत्य
तदीयपुत्रं निजघान खड्गैः ॥ ५१ ॥

अन्ये सगोत्रा बहवोऽपि तेन
सम्प्रापिता दण्डधरस्य सद्म ।
इमं दुराचारमवेक्ष्य वाढं
प्रजाः समस्ता विकला बभूवुः ॥ ५२ ॥

व्यथाऽभिभूताः सकला जनौघा
गत्वा [1]निशान्ते नृपतेः सुरम्ये ।
बलात्तदीयां नृपतां निरस्य
गीर्वाणशाहं विदधुर्महीपम् ॥ ५३ ॥

नेपालराज्ये घटनाऽद्वितीया
यल्लोकशक्तिर्मनसाऽतिरुष्टा ।
परम्पराप्राप्तधराधिपत्वं
निरस्य चक्रेऽवनिपं ततोऽन्यम् ॥ ५४ ॥

राजाधिराजोऽयमतीव खिन्नो
जगाम काशीं निजधर्मपत्न्या ।
विहाय देशं सुरलोकसौम्यां
त्रिस्रोतसां निर्मलनीरपूताम् ॥ ५५ ॥

स्वल्पे व्यतीते समये विषीदन्
गताधिपत्यं पुनरेव लब्धुम् ।
विधाय सन्धिं सितवर्णजात्या
समाजगामाशु निजं प्रदेशम् ॥ ५६ ॥

गीर्वाणयुद्धं दृढबालभावं
ग्रामान्तरं प्रेष्य, विपक्वबुद्धिम् ।
श्रीभीमसेनं सचिवं विधाय
स्वयं सुराज्यं व्यदधात्प्रसन्नः ॥ ५७ ॥

स्वस्याधिपत्ये नवतां दधाने
कुमायुकाङ्डादिप्रदेशमेषः ।
स्वराज्यभागं विदधद् विजित्य
राज्यस्य सीमां स्वबलैर्वितेने ॥ ५८ ॥

---

१. भवने ।

सकलजनसुखार्थं साधुकृत्यं प्रकुर्वन्
　　अयमवनिमहेन्द्रस्त्यक्तसर्वाधिपत्यः ।
प्रतिदिनमुपगम्य श्रीमदम्भोजपादं
　　गिरिशमुपचचारानङ्गसापत्नमीशम् ।। ५९ ।।

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये

अष्टमः सर्गः ।।



# नवमः सर्गः

अथो [1]वधूद्योवसुचन्द्रसङ्ख्ये
खिष्टीयवर्षे जनताभिनन्द्यः ।
गीर्वाणयुद्धो मनसाऽतिशुद्धो
नृपासनस्थोऽभवदिन्द्रतुल्यः ॥ १ ॥

राजोचितं प्राप्य गुणं पृथिव्यां
महाधिनेताऽतुलनीयशक्तिः ।
परिष्कृतं राज्यमिदं कथं स्या-
दित्येव संचिन्तयते स्म नित्यम् ॥ २ ॥

असंस्कृतं राज्यमनेन कर्तुं
सुसंस्कृतं मन्त्रिवरेण सार्धम् ।
विमृश्य सर्वं प्रथमं प्रणिन्ये
सत्सैनिकानां शिविरो महीयान् ॥ ३ ॥

शान्तस्वभावो विदितानुभावो
गोरक्षसम्राडयमेव वीरः ।
परन्तु राज्यप्रमुखाधिकारी
प्रधानमन्त्र्येव हि शक्त्युपेतः ॥ ४ ॥

---

१. १८०७ ई० ।

स्वशासनं केन्द्रगतं महौजा
विभज्य सर्वेषु प्रमण्डलेषु ।
सुचारुरूपेण समस्तखण्डं
सुशासितुं कर्मकरान्न्ययुङ्क्त ॥ ५ ॥

एतैः प्रबन्धैर्जनताः समस्ता
न्यायालये न्यायमरं समीयुः ।
आयेऽपि राज्यस्य चतुर्गुणाऽभूद्
वृद्धिः सदा चान्द्रमसी कलेव ॥ ६ ॥

यशोधनोऽयं जनतोपकृत्यै
राज्येऽयनं चारुतरं सुगम्यम् ।
निर्माप्य शैलीयवनीयदेशं
चकार नृणामधिवासयोग्यम् ॥ ७ ॥

अमुष्य मन्त्री प्रमुखो नयज्ञो
द्विजातिचाणक्य इव प्रबुद्धः ।
राष्ट्राभिमानी रिपुकक्षवह्निः
थापेत्युपाह्वो वरभीमसेनः ॥ ८ ॥

अयं च राजेत्युभयं विमर्शं
समानमेव स्म करोति सर्वम् ।
अन्योन्यमित्थं सविवेककार्यं
यदीयराज्ये विपदो न तस्य ॥ ९ ॥

द्वयोः समीहा प्रबलाऽधिचित्तं
यत्स्वीयराष्ट्रं प्रबलं सुराष्ट्रम् ।
स्याद् बिम्बरूपं परमद्यकाले
भ्रमन्ति सर्वत्र समीकमेघाः ॥ १० ॥

गौराङ्गशक्तिं परिवर्द्धमानां
जनातिगां भारतकोण-कोणे ।
संवीक्षमाणस्य नृपस्य तस्य
चित्तं नितान्तं चपलं बभूव ॥ ११ ॥

भूटानवर्माऽवधराजवर्गान्
गौराङ्गसाम्राज्यमनीहमानान् ।
एकत्र सूत्रे ग्रथितुं प्रयासो
व्यधायि तेनावनिपेन शीघ्रम् ॥ १२ ॥

'गुणेन्दुवैवस्वतचन्द्र-वर्षे
चीनस्य राज्ञापि विधाय वार्ताम् ।
संयुक्तसङ्घं स च तद्विरुद्धं
निर्मातुकामोऽकृत सत्प्रयासम् ॥ १३ ॥

देशाभिमानस्य महीभुजोऽस्य
राजत्वकालोऽतिमहत्त्वपूर्णः ।
दृष्टयेतिहासस्य महान्निगूढ़
इत्येव लोके ब्रुवतेऽपरज्ञाः ॥ १४ ॥

एतस्य काले भवति स्म युद्धं
नैपालिकैः सैन्यवरैरपारम् ।
गौराङ्गजातेरनुवारमस्या
रोमाञ्चकारि क्षणनाशलीलम् ॥ १५ ॥

विजित्य नीत्याऽखिलभारतीयान्
महीभुजो यावनशासकांश्च ।
प्रशासतस्तस्य भुवं स्वसीमा-
संरक्षणायेह विशेषचिन्ता ॥ १६ ॥

---

१. १८१३ ई० ।

नेपालभूपस्य मनीषिमन्त्री
श्रीभीमसेनो नृपनीतिविज्ञः ।
आजीवनं स्वीयवसुन्धरायां
निधातुमादेक्ष्यति नाङ्ग्लपादान् ॥ १७ ॥

कथं प्रवेशः सरलायनेन
क्षेत्रे तदीयेऽद्रिमयेऽतिरम्ये ।
तच्चिन्तया चिन्तितलोलचित्तो
विषीदति स्मातितरां स आङ्ग्लः ॥ १८ ॥

अत्रान्तरे [1]वेदसुधांशुकाल-
क्षपाकरेऽब्दे गजराजमत्तः ।
नेपालराजस्य चमूप्रधानः
समादिशत्सैन्यमतिक्रमाय ॥ १९ ॥

[2]दोषाकराभैरनुशासितानां
मध्ये प्रवेशं शिवराजभागम् ।
नेपालसैन्यैरभितो निरुध्य
बलं जयद्भिर्द्विषतोऽधिचक्रे ॥ २० ॥

गोरक्षसेनां त्वरया प्रयान्तीं
विलोक्य गोरक्षपुराभिमुख्ये ।
व्यचिन्तयंस्तेऽखिलगौरवर्णाः
कः शस्तमार्गः कलहस्य शान्त्यै ॥ २१ ॥

प्रशस्तमार्गः खलु सन्धिरेवे-
त्यालोच्य तेषां प्रमुखो वरीयान् ।
सम्प्रेषयामास विशेषदूतं
गोरक्षराजस्य समीपमाशु ॥ २२ ॥

---

१. १८१४ ई० । २. आङ्ग्लैः ।

प्रस्तावमेतं मनसाऽभिनन्द्य
तत्प्रेषितं शुद्धधिया नृपेण।
व्यमृग्यतैकः प्रखरोपलब्धिर्
विश्वासपात्रं दृढदेशभक्तः ॥ २३ ॥

ततः कुलानन्दमणिर्न्यगादि
सुब्बेत्युपाख्यो मनुजाधिपेन।
गौराङ्गसम्प्रेषितसन्धिकार्य-
सम्पादनाय त्वमितः प्रयाहि ॥ २४ ॥

निदेशमेतं क्षितिपस्य सोऽपि
नतेन मूर्ध्ना परिगृह्य मानी।
गन्तव्यदेशं प्रति निर्जगाम
स्मरन्नुमेशं मनसेष्टदेवम् ॥ २५ ॥

इतस्तु गौराङ्गपदाधिकारी
प्राग्दग्धचेता मलिनान्तरात्मा।
श्रीब्लेडशाख्योऽनुचरैः समेतः
संकेतितस्थानमुपाजगाम ॥ २६ ॥

रहस्युभौ वादनिवारणाय
समारभेतां वचनप्रपञ्चम्।
परन्तु तस्मिन् समये सिताङ्ग-
स्तमब्रवीद् दुर्वचनं सनिन्दम् ॥ २७ ॥

दुरुक्तिमेतां वदतो न जिह्वा
पतत्यधस्तेऽद्भुतमेतदस्ति।
इति ब्रुवंस्तं क्रुधयाऽरुणाक्षो
विभज्य वार्तां निरगात्सखेदम् ॥ २८ ॥

गतेऽथ तस्मिन् सहसा सिताङ्गः
परःसहस्रेण विशेषसैन्यैः ।
[1]वेदेन्दुकालक्षणदेशवर्षे
चक्रे प्रभुत्वं शिवराजभागे ॥ २९ ॥

प्रत्यागतास्वाङ्ग्लचमूषु तस्मात्
पुनश्च नैपालिकवाहिनीभिः ।
तत्राधिपत्यं निजसाहसिक्यैर्
व्यधायि शत्रोरभिभूय सैन्यम् ॥ ३० ॥

विनाऽऽहवं नैष्यति शान्तिमेष
नैपालिको युद्धकलाप्रवीणः ।
इत्याङ्ग्लसेनाप्रमुखाधिकारी
हेस्टिंग्जनामा हृदि निश्चिकाय ॥ ३१ ॥

बलाद् गृहीत्वाऽवधयावनेशं
ततः समाहृत्य च कोटिमुद्राः ।
एतद्विरुद्धं बहुकोपभाजा
व्यघोषि युद्धं जहताऽऽत्मभीतिम् ॥ ३२ ॥

प्राणान्तकानेकमहास्त्रहस्ताः
त्रिंशत्सहस्रं सितवर्णसेनाः ।
नेपालमाक्रम्य [2]पृदाकुमार्गै-
श्चक्रुः समीकं नरधैर्यलोपि ॥ ३३ ॥

इतश्च नैपालिकसैन्यमुख्यैः
सन्धिच्छलं कल्पयति स्म गौरः ।
ततश्च तस्य प्रमुखो जिलेस्पी
व्यधत्त सैन्योद्यममाश्वसंख्यम् ॥ ३४ ॥

---

१. १८१४ ई० । २. ५ ।

स देहरादूनमुपेत्य सैन्यै-
राक्रान्तवान्नूतनशस्त्रदीप्तैः ।
नेपालसैन्यं तु विशुद्धचित्तं
नावेत्तदीयां छलनीतिमेताम् ॥ ३५ ॥

गौरस्य सेनाधिपतेरुदन्तं
सांग्रामिकं प्राप्य रुषा ज्वलन्त्यः ।
गोरक्षसेनास्तरसा प्रजग्मुस्
तद्रक्षणायारिनिपातवीराः ॥ ३६ ॥

महाबलः श्रीबलभद्रसिंह-
स्तत्सैन्यनेता द्विषतामगम्यम् ।
कलङ्गदुर्गं परिकल्प्य शीघ्रं
तं रक्षितुं सैन्यबलैरवाञ्छीत् ॥ ३७ ॥

तस्मिन् सुदुर्गे [1]वियदव्ययाहि-
मितानि सैन्यान्यभवंस्तदानीम् ।
गौराङ्गसैन्यं परितः कलङ्गं
दुर्गं न्यरौत्सीद्दिवसत्रयान्तम् ॥ ३८ ॥

दिने चतुर्थे सितवर्णसैन्यं
तं दुर्गमाक्रम्य कृशानुशस्त्रैः ।
रोमाञ्चकार्याहवमाततान
यद् वीक्ष्य केषां न मनश्चकम्पे ॥ ३९ ॥

तथापि गोरक्षबलानि धैर्यं
न तत्यजुः प्रत्युत तद्बलानाम् ।
उत्साहभङ्गं प्रविधाय सेना-
पतिं जिलेस्पीं तरसा निजघ्नुः ॥ ४० ॥

---

१. ५०० ।

मार्टिण्डनामा पृतनाधिकारी
विशालशस्त्रास्त्रविशेषसज्जः ।
व्यूहं नवीनं परिकल्प्य मासं
कलङ्गदुर्गं न्यरुणत्समन्तात् ॥ ४१ ॥

गोरक्षसैन्यं न पराजितं स्या-
दाङ्ग्लीयशस्त्रानलतीव्रतापैः ।
इत्यात्मना तेन सताऽनुभूय
कुल्या वहन्ती रुरुधे तदानीम् ॥ ४२ ॥

जलानवाप्त्या परिशुष्ककण्ठं
पिपासितं चापि तदीयसैन्यम् ।
नापास्य धैर्यं द्विषतां चमूभिः
ससाहसं पञ्च दिनान्ययुद्ध ॥ ४३ ॥

सशस्त्रगोरक्षबलानि षष्टि-
र्नैत्रा समं निर्ययुरात्मशक्त्या ।
अजेयदुर्गात्सकलाङ्ग्लसैन्य-
'मुत्सादयन्ति प्रबलं नृशंसम् ॥ ४४ ॥

तद्दुर्गयुद्धे कृतशूरतानि
गोरक्षसैन्यानि शतानि पञ्च ।
लोकातिगां वीरगतिं समीयु-
र्देशाभिमानीनि यशःप्रियाणि ॥ ४५ ॥

सिताङ्गसैन्यानि शतानि सप्त
त्रिंशच्चमूचालकसंहृतानि ।
कृतान्तसम्राजिरमापुरस्मिन्
हताः स्म हा हेति विलापवन्ति ॥ ४६ ॥

---

१. इदं शतृप्रत्ययान्तस्य नपुंसकलिङ्गे बहुवचनस्य रूपम् ।

कलङ्गदुर्गस्य महाहवेन
प्रोन्मीलितं श्वेतशरीरनेत्रम् ।
नेपालसैन्यैः सह युद्धपूर्वं
विभेदनीतिं स विधातुमैच्छत् ॥ ४७ ॥

अयं पुरा जौनसरप्रजासु
प्रायुङ्क्त विस्फोटककूटमार्गम् ।
प्रभावितास्तेन समस्तलोका
विद्रुह्य गोरक्षचमूनिरस्यन् ॥ ४८ ॥

पदच्युतं नाहनराजमेष
कृत्वा, स्वपक्षे निजसैनिकांश्च ।
विभज्य पूर्वं लुडलाधिपत्ये
दुर्गेऽपरत्राक्रमितुं जिघाय ॥ ४९ ॥

जयद्रथं नाम विशालदुर्गं
नक्तंदिवं रक्षितुमात्मशक्त्या ।
योद्धा महाञ्छ्रीरणजोर-सिंहः
संलग्नचेताः सबलस्तदासीत् ॥ ५० ॥

मार्टिण्डनामा प्रमुखोऽधिकारी
तदीयसैन्यस्य महान् छलज्ञः ।
आदाय सैन्यान्ययुतं मदान्ध-
स्तद्दुर्गमाक्राम्यदलीकगर्वः ॥ ५१ ॥

तत्रापि गोरक्षसहस्रसैन्यैः
सिताङ्गसेना अवरुद्धपादाः ।
सन्त्राणहेतोर्निजजीवनाना-
मल्पावधावेव विहाय जग्मुः ॥ ५२ ॥

हेस्टिंग्सनामा पृतनेश एषा-
मसाधुनाऽनेन पराजयेनं ।
क्रोधाभिभूतोऽखिलसैन्यमुख्यं
पदच्युतं विद्रुतमाशु चक्रे ॥ ५३ ॥

बुटौलसान्निध्यगतं महान्तं
सुरक्षितं जीतगढाख्यदुर्गम् ।
वूडाधिपत्ये निजसैन्यचक्रं
क्षिप्रं हठादाक्रमितुं दिदेश ॥ ५४ ॥

सिताङ्गसैन्यान्यनलास्त्रकल्पैः
शस्त्रैरवाञ्छन्नदसीयसैन्यम् ।
उपद्रुतं कर्तुममुत्र युद्धे
परं हतास्तेन तदीयमुख्याः ॥ ५५ ॥

ततोऽनु पञ्चापगतान्महीपा-
नुत्कोचदानेन सपर्वतीयान् ।
महाशयो डेविडनामधेयो
वशंवदानात्महितान् व्यधत्त ॥ ५६ ॥

सेनाः समादाय परः सहस्रं
ततोऽतिवेगाद् वृढरामदुर्गम् ।
नालाख्यदुर्गं च प्रतस्थिवान् स
जयाभिकाङ्क्षी रणरङ्गवीरः ॥ ५७ ॥

तत्सैन्यनेताऽमरसिंहवीरः
संग्रामदक्षास्त्रिसहस्रसेनाः ।
भ्ररं समादाय गृहीतशस्त्रः
सिताङ्गनेत्राऽकृत घोरयुद्धम् ॥ ५८ ॥

भयानकेऽस्मिन् समरे प्रवृत्ते
व्युच्छिन्नपादाः सितवर्णसेनाः ।
वैवश्यमासाद्य तदीयसीमां
विहाय जग्मुस्त्वरितं सकम्पाः ॥ ५९ ॥

गौरक्षसैन्यं तदनीकवर्ग-
भितस्ततो भ्रष्टमतीव भीतम् ।
प्राणान् स्वकीयान् बहु याचमानं
विधाय मित्रं तदसून् ररक्ष ॥ ६० ॥

इतस्तु सैन्यं मकवानपुर्याः
शैलीयमार्गैरवदातकान्तेः ।
सम्प्राप शीघ्रं परसाभिधानं
कृषिप्रधानं नगरं प्रसिद्धम् ॥ ६१ ॥

तत्राधिकर्ता सिवलीतिनामा
भागद्वयं सैन्यमथो विधाय ।
गोरक्षवीरान्निजयुक्तिजालै
रोद्धुं समैहिष्ट नयज्ञधूर्तः ॥ ६२ ॥

गोरक्षवीराः परमर्धरात्रा-
वाक्रम्य गौराङ्गसमस्तसैन्यम् ।
चतुःसहस्राधिकसैन्ययूथं
व्यापाद्य निन्युर्द्रविणानि तेषाम् ॥ ६३ ॥

पराजितोऽयं पुनराक्रमाय
त्यक्तोद्यमोऽपास्त समस्तधैर्यः ।
नताननो रुद्धसमस्तवीर्यो
मन्त्रैरिवाहिर्व्यथितान्तरोऽभूत् ॥ ६४ ॥

परन्तु नालागढराज्यभूपो
रामाभिधानोऽतिरिपुस्तदीयः ।
इस्वाङ्ग्लसैन्याय समीकवस्तु
संम्प्रेरयामास तदाक्रमाय ॥ ६५ ॥

तत्प्रेरितैराक्टरलोनिवीरैः
थापेत्युपाह्वामरसिंहसैन्यम् ।
षाण्मासिकं युद्धमहीनधैर्यं
व्यधाद्विरामे विजयी बभूव ॥ ६६ ॥

अथापि दुःसाहसमत्यजन्त्यः
सिताङ्गसेना व्यदधुः समीकम् ।
ग्लेमिङ्गटाम्सन्प्रमुखाधिपत्ये
रैलादिभागानधिचक्रुरेव ॥ ६७ ॥

थापेत्युपाह्वः किल भक्तसिंहो
वीरो नयज्ञो रणकृत्यधुर्यः ।
सैन्यैः स्वकीयैरतितीव्रमन्युः
सिताङ्गसैन्यान्यरुणज्जवेन ॥ ६८ ॥

परन्त्वमुष्मिन् समरेऽधिनेता
श्रीभक्तसिंहोऽरिकरीन्द्रसिंहः ।
गौराङ्गतीक्ष्णास्त्रविविद्धमर्मा
लेभे परां वीरगतिं प्रसन्नः ॥ ६९ ॥

गोरक्षसैन्यं गढमल्हुयुद्धे
समागतं स्वं शरणं द्विषन्तम् ।
संरक्ष्य नैजार्यसुसंस्कृतीनां
चक्रेऽभिरक्षां न स नीचगौरः ॥ ७० ॥

[1]कूर्माधिराजो गढवालराजश्-
चोत्कोचमादाय तु विप्रलब्धौ।
सिताङ्गनिघ्नौ क्रमशो भवन्तौ
स्वाधीनतां स्वां जहतुस्तदग्रे ॥ ७१ ॥

मोरङ्गदेशस्तदधीन एव
विनास्त्रपातेन बभूव सद्यः।
साफल्यमेतत्सितवर्णजाति-
रभूतपूर्वं विधिनोपलेभे ॥ ७२ ॥

चलाचलां राष्ट्रतरीं नियन्तुं
संलग्नचित्तोऽमरसिंहवीरः।
अतीव दीर्घं सुदलं विलिख्य
प्रचेतयामास महाधिराजम् ॥ ७३ ॥

साफल्यमेतत्प्रविलोक्य तस्य
नेपालराजस्य विचारवान्वी।
सभा तु वैवश्यमवाप्य तेन
सन्धातुकामाऽभवदप्यकामा ॥ ७४ ॥

प्रस्तावमेतं फलतोऽवहेल्य
पुनश्च सा युद्धमतिं विहाय।
सेनासमुद्योगकृते प्रयासं
संहूय सेनाप्रमुखं चकार ॥ ७५ ॥

इतस्तु प्रागेव सिताङ्गनेत्रा
महीयसी युद्धकलाप्रवीणा।
सेनाच्छलेन प्रहिता च तेना-
मलेषगञ्जानतिदूरमासीत् ॥ ७६ ॥

---

1. कुमायूं।

विनैव रोधं द्विषतश्चमूनां
स्तोमोऽधियातो मकवानपुर्याम् ।
अथापि तीक्ष्णै रणवीरशस्त्रै-
रत्याहतो भ्रष्टविशो बभूव ॥ ७७ ॥

तावत्सहायमुपलभ्य तदीयसैन्यं
युद्धे विजित्य रणवीरविशालसैन्यम् ।
सर्वोपसर्गरहिते सहिते प्रदेशे
वासाय तत्र निजमासनमाततान ॥ ७८ ॥

नेपालपालसविधे परिपत्रमेक-
माङ्ग्लाधिपेन जयिनाऽधिसमीकमाशु ।
सन्ध्यर्थमेव प्रहितं महताच्छलेन
यत्स्वीकृतं न च विमृश्य धराधिपेन ॥ ७९ ॥

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
नवमः सर्गः ॥



# दशमः सर्गः

ततः शमेन स्वकराज्यकार्यं
सम्पश्यताऽनेन भुवोऽधिपेन ।
भूदानसन्तोषितभूसुरेण
पाल्या विशोका जनता ररक्षे ॥ १ ॥

विद्याविनोदी विदुषां प्रियोऽयं
त्रिशङ्कुजन्मेव दृढप्रतिज्ञः ।
समस्तराज्ये श्रुतनामधेयो
रराज दानेऽर्यमसूनुतुल्यः ॥ २ ॥

दीने कृपादृष्टिरतीव तस्य
प्रशंसनीया नितरां तदासीत् ।
यया [1]समज्ञा शशिनः कलेव
जने जनेऽलं ववृधे समन्तात् ॥ ३ ॥

सनातनं धर्ममनुश्रयन् यो
न वेदमार्गाद् विरतः कदापि ।
न चापि पाल्या विमुखा यदीया
श्रौतायनाद्धर्मविवृद्धिबीजात् ॥ ४ ॥

---

१. कीर्तिः ।

राजत्वकालेऽस्य तपोमयस्य
धर्मावतारस्य दयार्णवस्य ।
सर्वाः प्रजाः शान्तिमनुश्रयन्त्यो
व्यतीयुरस्वन्तमनेहसं[1] स्वम् ॥ ५ ॥

भुक्त्वा स राज्यं निजधर्मसेतुर्
विसूचिकारुग्ग्रहदुर्गृहीतः ।
विनश्वरं कायमपास्य धीरो
लेभे पदं माघवनं सुरम्यम् ॥ ६ ॥

ततोऽवनीशत्वमवाप बालो
राजेन्द्रशाहस्त्रिशरद्वयस्कः ।
संरक्षिका तस्य बभूव राज-
प्रसूर्नयज्ञा त्रिपुराभिधाना ॥ ७ ॥

समस्तराज्यस्य समं विधेयं
स्वबुद्धियोगादकरोत्तदानीम् ।
सा राजमाता नृपनीतिविज्ञा
प्रजाहितं चेतसि सन्दधाना ॥ ८ ॥

नेपालराज्ये प्रविलोक्य सा तु
गौराङ्गजातेरिह गृध्रदृष्टिम् ।
थापेत्युपाह्वं वरभीमसेनं
चक्रे प्रधानं सचिवं सुबुद्धिम् ॥ ९ ॥

श्रीभीमसेनो मतिमन्महीयान्
सम्प्राप्नुवन्नेव पदं महोच्चम् ।
सम्यक्तया चालयितुं स्वराज्यं
कायेन वाचा मनसा च लग्नः ॥ १० ॥

---

१. कालम् ।

अत्रैव काले धरणीप्रकम्पो
दुर्भाग्यतोऽभून्मुनिचन्द्र[1]वारम् ।
येनास्य राज्यस्य धनासुहानिर्
बभूव बह्वी गणनाऽतियाता ॥ ११ ॥

तथापि धैर्यं जहता न चैत्त-
मार्कस्मिकापन्नविपत्तिकाले ।
अनेन मन्त्रिप्रवरेण कार्यं
ससाहसं व्यस्ततया प्रचक्रे ॥ १२ ॥

आसीन्ममत्वं बहु यूनि तस्मिन्
राज्ञो जनन्या वसुधाधिनाथे ।
अतस्तदीयोपयमं व्यधत्त
कुलीनराजन्यगृहेऽतिबाल्ये ॥ १३ ॥

ततो बभूवातितरां सुलक्ष्मा
साम्राज्यलक्ष्म्या अचिरं महिष्याः ।
गर्भात्तनूजः सुभगः सुरेन्द्रः
पादोर्ध्वरेखः करचक्रचिह्नः ॥ १४ ॥

[2]धनत्रिकालद्विजराजवर्षे
विहाय भूमिं त्रिदिवं गतायाम् ।
राज्ञो जनन्यां त्रिपुराभिधायां
भुवः प्रकम्पोऽभवदब्धिवारम्[3] ॥ १५ ॥

अस्मिन् धनानां बहुमानवानां
देवालयानां च विशेषहानिः ।
जाता नराणामनुमानबाह्या
विपत्तिचक्रं न जहाति कंचित् ॥ १६ ॥

---

१. १७ । २. १८३२ ई० । ३. ४ ।

साम्राज्यलक्ष्मीरपि भीमसेन
इवातिशत्रुः सितवर्णजातेः ।
निजप्रदेशे स्थितिरेतदीया
तदक्षि सूचीव विविध्यति स्म ॥ १७ ॥

पञ्चाम्बुपञ्चाननयुद्धवीरं
भूपं मिलित्वा रणजीतसिंहम् ।
सा राजपत्नी भरताचलाया
गौराङ्गनिष्कासनमीहते स्म ॥ १८ ।

राज्याः प्रधानस्य च गौरवर्णो
विचारसाम्यं परितोऽवलोक्य ।
विभेदनीत्या निजकार्यसिद्ध्यै
प्रयत्नशीलः सततं बभूव ॥ १९ ॥

राजेन्द्रशाहोऽनतिदूरदर्शी
भीरुस्वभावो नितरामुदस्तः ।
देशाभिमानित्वविहीन एव
बुभूषुरीशो नयपालभूम्याः ॥ २० ॥

साकं सिताङ्गेन युधं विधातुं
श्रीभीमसेनं सचिवप्रधानम् ।
समुद्यतं वीक्ष्य महाधिराजः
पदच्युतं कर्तुमना बभूव ॥ २१ ॥

स राजदूतस्य पदे नियुक्तो
वङ्गप्रदेशे प्रहितोऽवनीशा[1] ।
इतोऽस्त्रगेहे ज्वलितः कृशानुर्
भस्मीचकाराङ्गलचमूकदम्बम् ॥ २२ ॥

---

१. तृतीयान्तं पदम् ।

अत्रान्तरे तत्सहजः कनीयान्
महाप्रतापो रणवीरसिंहः ।
भ्रातुर्मतिं प्राप्य विवेकशीला-
मनोकिनीशस्य पदं समैप्सत् ।। २३ ।।

परं स देशस्य महान् सुसेवी
क्षणं क्षणं देशसमृद्धिकामः ।
निरस्य तां भ्रातृमतिं प्रहृष्टः
स्वकार्यसंलग्नमना बभूव ।। २४ ।।

एतेन खिन्नो रणवीरसिंहो
निजाग्रजे शात्रवभावयुक्तः ।
एतद्द्विषद्भिः सह संगतोऽभू-
देतं निहन्तुं हृदयेन तीक्ष्णः ।। २५ ।।

वङ्गप्रदेशात्समुपागतेऽस्मिन्
श्रीभीमसिंहे नरदेवधान्याम् ।
साम्राज्यलक्ष्म्यास्तनयः कनीयान्
पञ्चत्वमाप्तः सहसा दिनान्ते ।। २६ ।।

हत्यापराधं पृथुकस्य तस्य
भीमे समारोप्य नितान्ततुष्टः ।
पाण्डेयपृष्ठो रणजङ्गविप्रो-
ऽभवद्विशिष्टोच्चपदं परीप्सुः ।। २७ ।।

तेनापराधेन महीमहेन्द्रः
प्रदाय कारागृहवासमस्मै ।
हितावभासं रणजङ्गधूर्तं
चक्रे प्रधानं सचिवं विचेताः ।। २८ ।।

धूर्त्तप्रधानो रणजङ्गविप्रः
सम्प्राप्नुवन्नेव पदं प्रधानम् ।
गौरान्मिलित्वा निजशक्तिबुद्धि-
प्रभावितांस्तानकृतोपधिज्ञान्[1] ॥ २९ ॥

कठोरमादेशमवाप्य तेभ्यः
श्रीभीमसेनं निजदेशभक्तम् ।
निपीडयामास स नीचकर्मा
बन्धालये क्लेशकरैरुपायैः ॥ ३० ॥

विज्ञाततद्धौर्त्यकलो महीशो
विधाय शीघ्रं पदमुक्तमेतम् ।
मत्या महिष्या गुरुवर्यविप्रं
श्रीरङ्गनाथं व्यधित प्रधानम् ॥ ३१ ॥

अयं मनीषी गुरुरङ्गनाथः
श्रीभीमसेनस्य कुशाग्रबुद्धेः ।
विज्ञाय सम्यक् प्रथितां महत्तां
कारागृहात्तं मुमुचे तदैव ॥ ३२ ॥

तद्भ्रातृजो माथवरः सुवीरो
वङ्गप्रदेशेऽक्षिसमा[2] व्यतीत्य ।
लाहौरराजेन समं स्वयोगं
संस्थापयामास विशेषविज्ञः ॥ ३३ ॥

तदीयधानीं समवाप्य शीघ्रं
सेनापतित्वं व्यदधात्स वीरः ।
सुचारुकार्यं प्रविलोक्य तस्य
प्रसन्नचेता नृपतिर्बभूव ॥ ३४ ॥

---

१. छलज्ञानित्यर्थः । २. २ (वर्षद्वयम्) ।

ज्ञातं सिताङ्गैर्यदयं सुबुद्धि-
विहाय दौत्यं खलु शिष्यवर्गम्।
चयीकरोत्याङ्ग्लविरुद्धमेतं
कायेन वाचा मनसा च लग्नः ॥ ३५ ॥

तदाङ्ग्लमुख्यो भयभीतचेता
राजेन्द्रशाहं त्वरयोपगम्य।
स्वनीतिजालं परितः प्रसार्य
चकार तं स्वीयमतानुगं सः ॥ ३६ ॥

तन्नीतिमाश्रित्य धराधिपेन
संलोभितोऽपि द्रविणैः स वीरः।
स्वात्माभिमानी न च राजधानी-
मुपाययावाङ्ग्लकुनीतिविज्ञः ॥ ३७ ॥

इतः प्रधानो गुरुरङ्गनाथो
विधानसंशोधनमाशु कुर्वन्।
स्थाने [1]रसाया निजसैनिकेभ्यो
द्रव्यं प्रदातुं भरणे समैच्छत् ॥ ३८ ॥

एतद्विरुद्धं रणजङ्गविप्रः
सेनासु विद्रोहमतिं ततान।
येन द्विजोऽयं गुरुरङ्गनाथः
साम्राज्यलक्ष्म्या स्वपदादमोचि ॥ ३९ ॥

पुनः प्रधानं पदमाप्य धूर्त्तो
देशस्य शत्रू रणजङ्गविप्रः।
वार्धक्यमाप्तं बहुकष्टजुष्टे
कालप्रकोष्ठे प्रजिघाय भीमम् ॥ ४० ॥

---

१. रसेति भूमिनाम।

सिताङ्गवाञ्छा-परिपूर्णतायै
नेपालनिर्मातृमनस्विवीरः ।
तेनात्मघाताय विबाधितोऽयं
हा भीमसेनोऽकृत जीवनान्तम् ॥ ४१ ॥

गौराङ्गशत्रोर्निजदेशभक्तेर्
महात्मनस्तस्य विशालबुद्धेः ।
निशम्य वार्तां निधनस्य चारैर्
गौराङ्गसङ्घो नितरां जहर्ष ॥ ४२ ॥

ततः प्रसीदन् सितकायमुख्यो
मनोऽनुकूलं सचिवं प्रधानम् ।
सम्प्राप्य जालं निजकूटनीत्याः
प्रसारयामास ततस्त्यभूमौ ॥ ४३ ॥

अत्रान्तरे श्येतशरीरराज्य-
विरामकालः समुपागतोऽस्ति ।
इत्यात्मशक्त्या गणकैर्भविष्यद्-
वाणी प्रजासु प्रथिताऽतिवेलम् ॥ ४४ ॥

तां भाविवाचं गणकैर्निरुक्तां
गोरक्षसैन्यं रिपुभीतिदायि ।
निशम्य युद्धं विदधत्सिताङ्गै-
श्चम्पारणं मण्डलमाजिगाय ॥ ४५ ॥

अमर्षशोणाम्बुजरक्तनेत्रो
गौराङ्गमुख्यो मनुजाधिनाथम् ।
आहूय सैन्यस्य धनस्य हानेः
पूर्तिर्विधेयेत्यवदत्सगर्वम् ॥ ४६ ॥

अप्राप्य तस्योत्तरमेष गौरो
विवृद्धमन्युः स्फुरिताधरोष्ठः ।
संग्रामभूमाववतारणायै
विलिख्य तस्मै व्यसृजत्पलाशम् ॥ ४७ ॥

युद्धाय सज्जान् प्रविलोक्य गौरान्
राज्ञी रिपूत्खातमनाः स्वसैन्यम् ।
समादिशद् युद्धकृते स्वयं तु
रात्रिन्दिवं तद्गतमानसाऽभूत् ॥ ४८ ॥

अस्यां स्थितायां मम गौरजातेः
स्थितिः कदाचिन्नहि भाविनीह ।
स एवमाचिन्त्य विषैस्तदीयान्
प्राणाञ्जहार प्रणिधिप्रयुक्तैः ॥ ४९ ॥

हित्वा भुवं निजजनं विकलं विधाय
तस्यां सुरेन्द्ररमणीयपदं गतायाम् ।
सर्वाः प्रजा विगलदश्रुपृषन्निषिक्ता
हा हा गता क्व भवतीत्यवदन् समन्तात् ॥ ५० ॥

इति श्री-पशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
॥ दशमः सर्गः ॥



# एकादशः सर्गः

तस्याः सपत्नी ह्यथराज्यलक्ष्मीर्
हृद्यानवद्येन्दुकलेव रम्या ।
राज्याधिकाराऽऽप्तिविशेषचिन्ता
निश्छद्मभूपं वचनं तदूचे ॥ १ ॥

मम प्रियं वाञ्छसि नाथ चेत्त्वं
प्रशासनस्याधिकृतिं प्रदेहि ।
भूपोऽप्यनालोच्य समस्तशक्तिं
ददावमुष्यै समभीप्सितायै ॥ २ ॥

ततः स्वहस्ते निखिलाधिकार-
मवाप्य सा खञ्जनगञ्जनाक्षी ।
प्रसन्नवक्त्रा स्वमनोऽनुकूलं
शशास राज्यं विपुलं सयत्नम् ॥ ३ ॥

दुर्भावनाप्रेरितमानसेयं
राज्याधिकारी मम सूनुरस्तु ।
इतीच्छया घातयितुं सुरेन्द्रं
साम्राज्यलक्ष्म्यास्तनयं प्रयेते ॥ ४ ॥

परं स्वभावं फतहस्य वीक्ष्य
नैषा शशाकास्य विघातकृत्यै ।
तस्मादियं माथवरं प्रवीरं
लाहौरपुर्यां द्रुतमाजुहाव ॥ ५ ॥

दत्तं प्रधानं पदमेतयाऽसौ
सहर्षमङ्गीकृतवान् मनस्वी ।
सम्पादयामास नृपस्य कार्य-
मात्मीयभावेन कृतावधानः ॥ ६ ॥

प्रशासनं तस्य कुशाग्रबुद्धे-
रपक्षपातं परितोऽकलङ्कम् ।
लोकाः समुद्वीक्ष्य ददुः समोदं
'कलानिधानं' पदवीमसुष्मै ॥ ७ ॥

पदं गृहीत्वैव स साधुवृत्तो
भीमद्रुहो निन्द्यविधीन् कलङ्कान् ।
पाण्डेयवर्गानसुदण्डभाजो
विधानमाश्रित्य चकार धीरः ॥ ८ ॥

देशद्रुहस्तत्सहयोगिनो ये
निर्वासितांस्तान्निजदेशभागात् ।
अचीकरन्निर्दयतां दधानो
नेपालदेशस्य स कर्णधारः ॥ ९ ॥

नितान्तजिह्मो रणजङ्गसर्प-
स्त्वसाध्यरोगैः परिपीड्यमानः ।
स्वयं कृतैः पाप्मभिरन्तकस्य
निकेतनातिथ्यमुरीचकार ॥ १० ॥

सा राज्यलक्ष्मीरतिनीचबुद्धि-
रुभौ कुमारौ विजने गतासू ।
विधातुकामाऽनलदीप्तकोपा
जगाद तं माथवरं प्रधानम् ॥ ११ ॥

सम्भाषितोऽप्येष तया महिष्या
जघन्यकार्याय न सम्प्रवृत्तः ।
किं क्षुद्रकृत्याय भवो भवेऽस्मिन्
महामतीनां शशिकीर्तिभाजाम् ।। १२ ।।

राजाधिराजश्चरितं तदीयं
विज्ञाय सर्वं दलितान्तरात्मा ।
सर्वाधिकारं लघु शासनस्य
ततोऽधिजग्राह रुषाभिभूतः ।। १३ ।।

प्रशासनस्याधिकृतिं मदीया-
मादाय यूने मनुजेश्वराय ।
ददौ सुरेन्द्राय वसुन्धरेशो
विज्ञाय साऽभूत्कुपितोरगीव ।। १४ ।।

प्रधानहत्याविहितप्रयासा
सा राज्यलक्ष्मीरुदितप्रकोपा ।
मुक्ताधिकारा शयनं न लेभे
विषेण हीना भुजगीव खिन्ना ।। १५ ।।

इतोऽवदाताङ्गविवासनाय
महामतिर्माथवरः प्रधानः ।
उत्साहितो भारतभूमिपाला-
नेकत्र सूत्रे ग्रथितुं प्रयेते ।। १६ ।।

विज्ञातवृत्तो गगनाभिधानो
राज्ञ्याः प्रियस्तस्य महानरातिः ।
न्यवेदयत्तद्विहितप्रयासं
सिताङ्गसेनाप्रमुखाय गत्वा ।। १७ ।।

सेनाधिकारी लरिसस्तदीया-
नुजाभुवो जङ्गबहादुरस्य ।
साहाय्यमादाय ददौ मनीषां
विहिंसितुं तं गगनाय शीघ्रम् ॥ १८ ॥

सर्पाब्धिवैवस्वतयामिनीशे[1]
सम्वत्सरे सा महिषी विखिन्ना ।
रोगापदेशेन निजावरोधे[2]
संहूय तं माथवरं जघान ॥ १९ ॥

ततश्च सा मुख्यपदं प्रदातुं
स्वप्रेयसे श्रीगगनाय येते ।
राजाधिराजस्तु समीहते स्म
कर्तुं प्रधानं फतहं प्रवीरम् ॥ २० ॥

जाते विवादे समितिस्तदीया
पक्षद्वयं तोषयितुं विमृश्य ।
सम्यक्तया शासनचालनाय
न्ययुङ्क्त बुद्ध्या चतुरो ह्यमात्यान् ॥२१॥

येषु ह्यभूवन्नहिमानसिंहो
महामतिर्जङ्गबहादुरश्च
देशाभिमानी फतहो विवेकी
राज्ञ्या हितैषी गगनो दुरात्मा ॥ २२ ॥

पञ्चापराजेन समं मिलित्वा
सिताङ्गनिःसारणमीहमानः ।
स्वदेशभक्तः फतहो निरुद्ध-
स्तत्पृष्ठसंवाहकमन्त्रकाभ्याम् ॥ २३ ॥

---

१. १८४५ ई० । २. अवरोधः अन्तःपुरम् ।

महाधिराजः फलतस्तदानीं
वैवश्यमाप्तो बहुधा विचिन्त्य ।
[1]शिष्याऽऽहवेऽशिश्रियदाङ्ग्लजात्या
तटस्थतानीतिमनल्पशक्त्या ॥ २४ ॥

इमौ सुबुद्धी नृपनीतिदक्षौ
देशाभिमानौ फतहाहिमानौ ।
महीभृताऽप्राप्तसमर्थनत्वात्
प्रभावहीनौ जनतास्वभूताम् ॥ २५ ॥

सा राज्यलक्ष्मीः पुनरेव तूर्ण-
मीर्ष्याश्रयाशज्वलदन्तरात्मा ।
तयोः सपत्नीसुतयोरुपेन्द्र-
सुरेन्द्रयोर्जासनतत्पराऽभूत् ॥ २६ ॥

शिवेतरां मंक्षु प्रवृत्तिमेतां
विखिद्यमानोऽ[2]वनिपे निवेद्य ।
धियां निधिर्जङ्गबहादुरोऽसौ
कालास्यतस्तौ व्यदधाद् विमुक्तौ ॥ २७ ॥

कुचक्रमेतत्प्रविलोक्य राज्ञ्या
दुरात्मनस्तस्य च तत्प्रियस्य ।
तज्जीवनान्तं प्रविधाय कर्तुं
स ऐहत स्वोन्नतिमार्गशोधम् ॥ २८ ॥

स [3]शास्त्रवेदान्तकचन्द्रवर्षे
सितम्बरे वेदसुधांशु[4]तिथ्याम् ।
खड्गाहतं तं नितरां विधाय
यमालयं प्रैषयदाशु धीरः ॥ २९ ॥

---

१. शिष्य सिक्ख इति । २. अवनिपे इति चतुर्थ्येकवचने रूपम् ।
३. १८४६ ई० । ४. १४ तिथौ ।

अथाव्ययत्तां नृपधर्मपत्नीं
व्यधापयत्तद्धतिकर्म राजा ।
अक्षान्तिबुद्ध्येत्यवगत्य राज्ञी
रुषाऽरुणाक्षी यमकल्परूपा ॥ ३० ॥

निजावरोधे सकलान् सदस्यान्
सभास्थितान् सत्पुरुषान् विशिष्टान् ।
आकार्य वैवस्वतलोकमुख्या-
तिथीन् प्रचक्रे दनुजेव साधून् ॥ ३१ ॥

अनन्तरं सा रणकौशलज्ञं
जङ्गं प्रधानं पृतनाधिपञ्च ।
कृत्वा पुनस्ताववनीशपुत्रौ
कालातिथी कर्तुमना बभूव ॥ ३२ ॥

कालेऽप्यमुष्मिन् विफलप्रयासा
सम्प्राप्य मोहं भुजगीव मन्त्रैः ।
शक्त्या विहीना खलु सर्वथा सा
वाराणसीं गन्तुमनेन बाध्या ॥ ३३ ॥

सहामुयाऽसौ वसुधाधिनाथो
राजेन्द्रशाहोऽपि जगाम काशीम् ।
तीर्थेच्छया कूटधिया विरक्तो
धर्मप्रियः प्राक्तनसीमरक्षः ॥ ३४ ॥

ततो [1]रसाब्ध्यन्तकयामिनीशे
नवम्बरे मासि [2]गुणाक्षितिथ्याम् ।
युवा नृपः साधुसुरेन्द्रशाहो
जग्राह राज्याखिलकार्यभारम् ॥ ३५ ॥

---

१. १८४६ ई० । २. २३ तिथौ ।

पश्चादयं जङ्गबहादुराख्यः
प्रधानमन्त्री नृपनीतिदक्षः ।
सम्प्रेषयामास रहस्यगर्भां
सन्देशवाचं नृपतेः समीपे ॥ ३६ ॥

विहाय काशीं नृपतेऽविलम्बं
समेत्य धानीं निजराज्यसूत्रम् ।
संचालयेः साधुतया न चेत्त्वं
पदच्युतः स्या इति मे मनीषा ॥ ३७ ॥

प्रधानसन्देशमहृद्यमित्थं
वगम्य राजा नितरां व्यषीदत् ।
पुनश्च धानीं प्रतिगत्य राज्य-
चिकीर्षयाऽनल्पमचिन्तयत्सः ॥ ३८ ॥

अजानताऽनेन तदीयकूट-
नीतिं ततः प्रस्थितमाशु राज्ञा ।
व्यर्तकि चास्मिन् विषये विचार-
झञ्झानिलैः कम्पितमानसेन ॥ ३९ ॥

परन्तु भूपः सरलस्वभावो
निर्व्याजचेता निजराजधानीम् ।
सम्प्राप्नुवन्नेव पदच्युतोऽयं
कृतः प्रधानेन दृढात्मशक्त्या ॥ ४० ॥

स्त्रैणस्वभावो नृपतिर्दयालू
राजेन्द्रशाहो गिरिशाङ्घ्रिभक्तिः ।
संस्थापितो भक्तपुरस्य दुर्गे
सुरक्षिते शस्त्रकरैः समन्तात् ॥ ४१ ॥

ततः प्रधानेन युवा महीपो
नृपासनस्थो विहितः सुरेन्द्रः।
[1]जायाब्धिवस्विन्दुमितेशुवर्षे
[2]धनेन्दुतिथ्यां मइ-मासि तेन ॥ ४२ ॥

प्रधानमन्त्री नवयौवनेऽयं
प्राणान् मदीयानभितो ररक्ष।
विचिन्त्य चैतन्मनुजाधिपेन
समर्पितं शासनसूत्रमस्मै ॥ ४३ ॥

नीत्याऽनया तस्य धराधिपस्य
स्वकार्यसिद्धौ सफलः प्रधानः।
नाम्ना तदीयेन समस्तकार्ये
प्रायुङ्क्त पञ्चाङ्गुलिरक्तमुद्रे ॥ ४४ ॥

स्वकूटनीत्या विवशं महीपं
विधाय सर्वाधिकृतिं निनाय।
ततः प्रभृत्येव स शाहवंश्यो
जगाम भूपश्चिरपारवश्यम् ॥ ४५ ॥

वितन्वतस्तस्य च पाणिपादं
राणान्ववायस्य गतिं विलोक्य।
नृपात्मजोऽनारतखिन्नचेता
न प्राभवद्धार्दिकवेगरोधे ॥ ४६ ॥

राजाधिराजं सचिवस्य पाणेर्
निरीक्ष्य जङ्गस्य सुकाष्ठपुत्रम्।
त्रैलोक्यशाहस्तनयस्तदीयो
विषीदति स्मातितरां नतास्यः ॥ ४७ ॥

---

१. १८४७ ई०। २. १२ तिथौ।

तत्कन्ययोद्वाहमनिच्छताऽपि
पितुर्निदेशः परिपालनीयः ।
इत्येव बुद्ध्याऽवनिपाङ्गजेन
सबाधमेवोमिति संन्यगादि ।। ४८ ।।

[1]जायावधूकालतमीनवर्षे
स्वर्गप्रदे विष्णुमतीप्रतीरे ।
दिष्टाहिसंदष्टप्रधानमृत्यु-
र्निवेदितस्तत्सहजेव राज्ञे ।। ४९ ।।

त्रैलोक्यशाहे सति यूनि भूपे
नाहं प्रधानो भवितास्मि नूनम् ।
विमृश्य चैतद्रणसिंहदीपो
ग्रामान्तरं तं गमयाञ्चकार ।। ५० ।।

तमेकलं वीक्ष्य महीपतिं स
तत्प्राप्तपञ्चाङ्गुलिरक्तमुद्रः ।
संघुष्य नेपालप्रधानमाशु
स्वशासनं तत्र चकार नीत्या ।। ५१ ।।

यथेच्छचारित्वमवेक्ष्य राणा-
प्रशासकस्यार्यमिलेशसूनुः ।
कृत्वैव तस्यान्तमहं किरीटं
धरेयमित्थं शपथं चकार ।। ५२ ।।

प्रतिश्रुतिं तस्य निशम्य, मन्त्री
यावद्विषं प्राणहरं प्रदातुम् ।
इयेष तावद् यमसर्पदष्टो
दिव्यां पुरीं भूपसुतो जगाम ।। ५३ ।।

---

१. १८७७ ई० ।

राजा सुरेन्द्रोऽपि तनूद्भवस्य
वियोगजन्मानलदह्यमानः ।
[1]सुधांशुवैवस्वतकालचन्द्रे
जगाम माहेन्द्रपदं विषीदन् ॥ ५४ ॥

पुत्रस्य पौत्रस्य च मृत्युरूपां
निशम्य वार्तां हृतभूपतित्वः ।
राजेन्द्रशाहो निगृहीतकायो
वव्राज पौरन्दरधाम खिन्नः ॥ ५५ ॥

वर्षाभ्यन्तर एव तेषु गतवत्स्वानन्ददं स्वःपदं
लोकाः शोकपयोधि-तीव्रलहरी-मग्ना बभूवुश्चिरम् ।
पश्चात्ते शशिशेखराङ्घ्रियुगलं ध्यात्वा मुहुश्चक्रिरे
त्रैलोक्यात्मभुवं नृपासनपदासीनं [2]रसाब्दात्मकम् ॥ ५६ ॥

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये

एकादशः सर्गः ॥



---

१. १८८१ ई० ।  २. ६ वर्षदेशीयम् ।

## द्वादशः सर्गः

[1]तमीनवसुकालेन्दाविशुदर्षे दिसम्बरे ।
[2]तनौ तिथ्यामथो पृथ्वीशाहो भूपत्वमाप्तवान् ॥ १ ॥

तदानीं [3]रसवर्षोऽयं प्रधानस्य वशंगतः ।
क्रीडासक्तमना बालः किं जानीयाद्धिताहितम् ॥ २ ॥

तस्माच्छासनसूत्रं च रणोद्दीपस्य हस्तगम् ।
विधानतः समायातं राजनीतिविवेदिनः ॥ ३ ॥

एतत्प्रधानमन्त्रित्वेऽभूवन् क्लेशयुता जनाः ।
नैराश्यतमसाऽऽच्छन्ना आशाकिरणकाङ्क्षिणः ॥ ४ ॥

राज्यस्थाः सकला लोका हतभाग्या हतप्रभाः ।
यत्र तत्र समाक्षेपं प्रत्यहं तस्य चक्रिरे ॥ ५ ॥

राज्यस्य प्रचुरं द्रव्यं प्रजार्थे न प्रयुज्यते ।
इति चिन्तानिमग्नानां यूनां कोपाग्निरज्वलीत् ॥ ६ ॥

प्रधानस्य तथा सेनाधीश्वरस्य जिघांसया ।
उपजापो मिलित्वैतैर्व्यधायीतरदुर्गमः ॥ ७ ॥

द्विपञ्चाशद्युवानस्तु तदर्थं प्रतिजज्ञिरे ।
दिवसोऽप्येक एतैश्च निश्चितो निर्जनस्थले ॥ ८ ॥

---

१. १८८१ ई० ।   २. १ तिथौ ।   ३. ६ वर्षात्मकः ।

परं गगनसिंहस्य भूतपूर्वस्य मन्त्रिणः ।
पदाधिकारी तनयः पिशुनश्चोत्तरध्वजः ॥ ९ ॥

प्रधानमुपगम्याशु निजोन्नति-समीहया ।
रहस्योद्‌घाटनं चक्रे उपजापविधायिनाम् ॥ १० ॥

राजपुत्रनरेन्द्राद्या येऽप्यासंस्तद्विरोधिनः ।
नरेन्द्रविक्रमौ तेषु प्रेषितौ नगरान्तरे ॥ ११ ॥

[1]विधुवेदमिता विप्रास्तथोच्चैर्दश कौलिकाः ।
ब्राह्मणा बन्धनागारं यावज्जीवनमाप्नुवन् ॥ १२ ॥

सम्भाषणे विदेशीयैः सदनाच्च बहिर्गमे ।
प्रतिरोधः कृतस्तेन किञ्चिज्ज्ञस्य महीपतेः ॥ १३ ॥

एतेन प्रतिबन्धेन रात्रिन्दिवमिलेश्वरः ।
पञ्जरस्थो यथा कीरस्तथा दुःखमवाप्तवान् ॥ १४ ॥

सर्वथा लोकसम्पर्काद् वञ्चितः पृथिवीपतिः ।
राणानुभावसंमुग्धो विलासी नितरामभूत् ॥ १५ ॥

प्रधानमन्त्रिणा धीरशमशेरेण धीमता ।
निजं कन्याद्वयं तस्मै भूभुजे दत्तमात्मना ॥ १६ ॥

महाराजाधिराजोऽयं सहवासाय वारितः ।
राज्ञ्या नवोढया साकं चेष्टमानोऽपि नित्यशः ॥ १७ ॥

यदा धीरात्मजश्चन्द्रः प्रधानत्वं गृहीतवान् ।
तदा राज्यगता लोकाः सुखश्वासमवाप्नुवन् ॥ १८ ॥

नानेन सदृशः कोऽपि कूटनीतिविशारदः ।
पुराऽभूदिति मे बुद्धिर्धरणेयं जनेष्वपि ॥ १९ ॥

---

१. ४१ ।

यथा जङ्गः सिताङ्गस्य सहयोगेन शासनम् ।
विधातुं चेष्टते स्मात्र तथैवायं व्यचेष्टत ।। २० ।।

परमेतत्प्रधानत्वे नासीच्छिक्षालयः क्वचित् ।
अतो बहुविधो लोकः शिक्षया वञ्चितोऽभवत् ।। २१ ।।

हृदिस्था धारणा तस्य लोकः स्याद्यदि शिक्षितः ।
तदा मे शासने बाधा भविष्यति न संशयः ।। २२ ।।

एतद्भयेन कुत्रापि शिक्षासंस्थाननिर्मितौ ।
प्रदत्ता स्वीकृतिर्नैव कल्याणं वाञ्छता निजम् ।। २३ ।।

तदादेशमनन्वानैर्यैः कैश्चित् तद् विनिर्मितम् ।
ते त्वभूवन्नृपद्रोहकरा दण्डस्य भागिनः ।। २४ ।।

आङ्ग्लानां परमो भक्तस्तत्प्रसादाय यत्नवान् ।
तत्कृपातोऽभयो भूत्वा स्वं कार्यं समपादयत् ।। २५ ।।

मध्ये तावद् विलासित्वात्पृथ्वीशाहो नराधिपः ।
अल्पायुरेव सम्प्राप्तो दिवं त्यक्त्वा सुताञ्छिशून् ।। २६ ।।

[1]रसवर्षदशः पुत्रस्तदानीं तस्य भूपतेः ।
श्रीमान् त्रिभुवनोऽबोधः सर्वस्य प्रियदर्शनः ।। २७ ।।

[2]विधुचन्द्रनवेन्द्वब्दे गृहीत्वा पितुरासनम् ।
महता तेजसा युक्तः सर्वानेषोऽभ्यनन्दयत् ।। २८ ।।

अयं कमलपत्राक्षः कम्बुकण्ठो रविप्रभः ।
व्यूढोरस्को महाबाहुर्नारायणसमोऽभवत् ।। २९ ।।

शैशवावस्थया युक्तं नवजातं महीपतिम् ।
दैनन्दिनं प्रधानस्तु स्वयं गत्वा स्म वीक्षते ।। ३० ।।

---

१. ६ वर्षात्मकः । २. १९११ ई० ।



श्री ५ महाराजाधिराज त्रिभुवन वीर विक्रम शाहदेव।

शनैः शनैर्वर्द्धमानो धरणीशो महामतिः ।
कैशोरलीलयाऽविक्षज्जनमानससद्मसु ॥ ३१ ॥

यथा गोप्यः प्रियं कृष्णं दृष्ट्वा मोहमुपागताः ।
तथैनं वीक्ष्य का वामा मोहिता नाभवंस्तदा ॥ ३२ ॥

स्वकार्यसाधनायेमं किशोरं नव्यभूमिपम् ।
विलासिनमकर्मण्यं विधातुं प्रायतिष्ट सः ॥ ३३ ॥

तथाप्यस्य मनो नाभूद् गृहीतं विषयादिभिः ।
जितेन्द्रियान् विषयिणः कर्तुं कोऽस्ति क्षमो भुवि ॥ ३४ ॥

विद्याग्रहणशीलानां कृते तत्र न साधनम् ।
तथाप्यभिरुचिस्तस्याध्ययने पृथिवीपतेः ॥ ३५ ॥

अल्पे वयसि सम्प्राप्ते विश्वसाहित्यविद्यया ।
विभूषितो बभूवासौ सत्पथे पददायकः ॥ ३६ ॥

दिव्यवाचि महान् स्नेहो भक्तिपूर्णो महीपतेः ।
यथा जनन्यां पुत्रस्य लक्ष्यते सत्त्वशालिनः ॥ ३७ ॥

इतरा अप्यनेका या भाषा लोकसमुद्भवाः ।
तास्वप्यस्याधिकारोऽभूत्पूर्णरूपेण साम्यतः ॥ ३८ ॥

व्यायामे मल्लयुद्धे च संगीते चित्रकर्मणि ।
आसीदभिरुचिस्तस्य क्षात्रकर्मानुरूपगा ॥ ३९ ॥

यथा चन्द्रः कलाभिस्तु पूर्णः खे परिशोभते ।
तथाऽयं भुवि भूपालः कलाभिः परिशोभितः ॥ ४० ॥

प्रसादसदनं यस्य वदनं हृदयं तथा ।
सदयं वाचि माधुर्यं स कस्मै नाभिरोचते ॥ ४१ ॥

शारीरं वस्य सौन्दर्यं मन्मथस्याप्यहंकृतेः ।
मर्दनं परमस्मिंस्तु नासीत्कश्चिन्मदज्वरः ॥ ४२ ॥

अर्जुनो नाम राजन्यो भारतीयो महाबलः।
उच्चवंशे समुत्पन्नो यशस्वी गुणवत्प्रियः॥ ४३॥

तद्गृहे कन्यके जाते सुशीले चारुलोचने।
साक्षाल्लक्ष्मीस्वरूपे ते मातापित्रोः सुखाकरे॥ ४४॥

एकदा धर्मपत्नीं स जगाद रहसि स्थितः।
कान्ते कन्याद्वयं जातमधुना यौवनान्वितम्॥ ४५॥

दातव्यं तत्तु कस्मैचित्क्षत्रियाय महात्मने।
येनाहं कृतकृत्यः स्यामिति मे सम्मतिः प्रिये! ॥ ४६॥

जानीषे यदुवाचासौ शास्त्रविद् गणकोत्तमः।
हस्तरेखां समुद्वीक्ष्य कन्ययोः साधुवृत्तयोः॥ ४७॥

चिन्तार्णवनिमग्नं मां बभाषे मितभाषणः।
त्वदीये कन्यके वृत्ते राजपत्न्यौ भविष्यतः॥ ४८॥

सम्भाषणं च दम्पत्योरन्योन्यं चिन्तयान्वितम्।
श्रुत्वा तद्धितकृद् विप्रो बभाषे मधुराक्षरम्॥ ४९॥

वरः कन्यानुरूपोऽस्ति नेपालस्य महीपतिः।
सर्वलक्षणसम्पन्नः साधुवृत्तो महाबलः॥ ५०॥

विद्याविनयसम्पन्नो राजोचितगुणान्वितः।
सौन्दर्यजितकन्दर्पः साक्षान्नारायणोऽपरः॥ ५१॥

अनुरूपाय दातव्या कन्येति श्रुतिसम्मतिः।
तस्मात्तस्मै समर्प्येमे सुखी भव महामते! ॥ ५२॥

निधाय हृदि विप्रस्य वाक्यं पत्न्यानुमोदितः।
जगाम तरसा तस्य धानीमादाय कन्यके॥ ५३॥

नेपालाधिपसान्निध्यं सम्प्राप्य निजगाद सः।
कन्ये मदीये सद्वृत्ते गृहाण पृथिवीपते! ॥ ५४॥

सुभगे महिषीयोग्ये सर्वलक्षणसंयुते ।
राजन्यकन्ये संवीक्ष्य स्वीकृतिं प्रददौ नृपः ।। ५५ ।।

ताभ्यां सह कृतोद्वाहः शास्त्रोक्तविधिना प्रभुः ।
अमन्दानन्दमासाद्य कृतार्थोऽभवदात्मना ।। ५६ ।।

मैथिलीं समनुप्राप्य यथा रामो नरोत्तमः ।
अन्वभूत्सुखमत्यन्तं तथैवायं नृपोत्तमः ।। ५७ ।।

गते बहुतरे काले ज्यायसी महिषी प्रिया ।
महेन्द्रं नाम सर्वाङ्गसुन्दरं सुषुवे सुतम् ।। ५८ ।।

अन्येऽपि बहवः पुत्रास्तस्याजायन्त भूपतेः ।
समस्तकार्यचातुर्यं प्राप्ता बुद्धिमतां वराः ।। ५९ ।।

उचितावसरे समागतेयं
धरणीशः सुतमग्रजं महेन्द्रम् ।
न्यदधाद् द्रुतमेव यौवराज्ये
निगमाद्युक्तविधानविज्ञविप्रैः ।। ६० ।।

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
द्वादशः सर्गः ।।



# त्रयोदशः सर्गः



जनेषु केषामपि पारदृश्वनां
नृशंसराणापरिवारशासने ।
न भावना साधुतमा सचेतसां
विलोक्यते राज्यनिवासिनां क्वचित् ॥ १ ॥

अहं च तच्छासनबन्धने स्थितो
विधित्सुरप्यत्र न किंचन क्षमः ।
निबद्धपादो निगडेन पीडितो
निषाद्यधीनः करिणामिवेश्वरः ॥ २ ॥

विमर्शमेवं विदधद् दयार्णवः
क्षणे क्षणे व्याकुलमानसो नृपः ।
प्रभङ्क्तुमेतत्प्रभुतां चिरस्थितां
प्रतीक्षते स्मावसरं सबान्धवः ॥ ३ ॥

तदन्वयैः शोषितशोणिताञ्जनान्
निरीक्ष्य भूजानिमनोऽतिविव्यथे ।
प्रतिक्षणं चिन्तयते स्म भूपतिः
कथं समेयाज्जनतन्त्रपद्धतिः ॥ ४ ॥

तदा सिताङ्गस्य चिरस्थिरासनं
प्रकम्पमानं भवति स्म भारते ।
तदीयनेता निजदेशशासनं
विधातुकामोऽविरतं स्वहस्तगम् ॥ ५ ॥

अमुत्र मध्ये नयपालवासिनं
जनेषु दुर्भावप्रचारणोद्यतम् ।
ततस्त्यनेत्रा सहयोगकाङ्क्षिणं
निरीक्ष्य राणान्वय आकुलोऽभवत् ॥ ६ ॥

विचारशीलो ननु पद्मनामकः
प्रधानमन्त्री जनवाञ्छितो मृदुः ।
प्रजासु शान्त्यै व्यतरत्प्रपत्रकं
[1]षडब्धिभाग्यद्विजराजवत्सरे ॥ ७ ॥

अनेन कार्येण प्रसादमारुतो
ववौ समस्तस्य जनस्य मण्डले ।
पुनर्नवाशाकिरणं समैहत
ततस्त्यमन्त्रिप्रवराज्जनोऽखिलः ॥ ८ ॥

शनैः शनैर्मध्यनिवासिमानवे
समेधमानां प्रविलोक्य जागराम् ।
ततस्त्यनेतुर्हृदये मनोरथो
बभूव पौराधिकृतेः समर्पणे ॥ ९ ॥

परन्तु चन्द्रात्मजमोहनाभिधो
वरूथिनीशो बहुनीतिवेदकः ।
प्रधानचेतःस्थितलालसामिमां
स्वकीयशक्त्यावरुरोध सान्वयः ॥ १० ॥

समीहमानोऽपि ! विशुद्धचेतसा
प्रशासनेऽस्मिन् परिवृत्तिमेषकः ।
न कर्तुमीशो निगृहीतचेतनः
प्रजोपसर्गप्रशमाय भीरुकः ॥ ११ ॥

---

१. १९४६ ई० ।

चमूपतेर्मोहनतस्तिरस्क्रियां
विशङ्कमानस्तृणवत्स्वमासनम् ।
द्रुतं परित्यज्य जगाम भारतं
विषीददात्मप्रशमाय दैष्टिकः ॥ १२ ॥

स्वतन्त्रताक्रान्तिविधिं सुचेतसा
समर्थयन् भूमिपतेः सहायकः ।
स्वयं ददौ [1]वासवयोगमुत्तमं
जनाय सत्याग्रहकारिणेऽयकम् ॥ १३ ॥

गतेऽथ तस्मिन् रमणीयभारतं
विहाय मन्त्रित्वपदं विवेकिनि ।
प्रधानमन्त्रित्वमवाप मोहनो
[2]यमाब्धिभाग्यद्विजराजवत्सरे ॥ १४ ॥

सनातनं धर्ममनुश्रयन्नपि
व्यपोहितुं दुःखमलं प्रजागतम् ।
न चैष जातः सफलः स्वशासने
व्यशिश्रियत्प्रत्युत कर्कशायनम् ॥ १५ ॥

अनेन साचिव्यपदं सुगृह्णता
स्वभूतपूर्वेण प्रधानमन्त्रिणा ।
कृपालुना तेन कृतं विशोधनं
समाहितं नो प्रभुतामभीप्सुना ॥ १६ ॥

अशेषलोकान्नृपनीतिवेदिनो
निगृह्य कीनाशनिकेतनातिथीन् ।
विधातुमिच्छन्नपि काश्यपीभुजा
निवारितोऽयं विवशस्तदाऽभवत् ॥ १७ ॥

१. आर्थिकम् इत्यर्थः । २. १९४८ ई० ।

ततः प्रधानो वसुधेशशेमुषीं
प्रशासनस्यातिविरोधकारिणीम् ।
वगम्य भीत्या नितरां हतप्रभो
नवीनमेघान्तरितो यथा शशी ।। १८ ।।

तदङ्गरक्षान् परितो नियोजितान्
रुषाभिभूतो निजगाद दुर्मनाः ।
विना निदेशं नृपतिः स्वसौधतो
बहिर्न गन्तुं प्रभवेत्कथंचन ।। १९ ।।

प्रधानचेतःस्थितदुर्विचारणा-
मिमां परिज्ञाय महीदिवस्पतिः ।
[1]नभोऽहिभाग्येन्दुमिते नवम्वरे
तिथौ [2]रिपौ वीर्यमनुश्रयन् दृढम् ।। २० ।।

मृगव्यदम्भेन स नीतिमान्नृपो
विहाय सौधं सजनः सबान्धवः ।
बहिः समागत्य जनानुरञ्जकः
समाश्रयद् भारतदूतवेश्मनि ।। २१ ।।

प्रवृत्तिमाश्चर्यकरीमसम्भवां
विश्रृण्वताऽनेन प्रधानमन्त्रिणा ।
व्यचेष्टयताऽयं नृपतिः समादृतः
कथं चिदायान्निजसद्म सान्वयः ।। २२ ।।

यदा न साफल्यमवाप्त एषक-
स्तदाङ्ग्लदूतालयमाययौ द्रुतम् ।
स्थितिं समां तं समुवाच विस्मितो
महाननर्थोऽजनि मत्कृतेऽपरः ।। २३ ।।

---

१. १९५० ई० । २. ६ ।

किमत्र कार्यं सुमते ! विपर्यये
मतिः प्रदेया हितमिच्छता त्वया ।
विपत्तिकाले समुपागते नृणा-
मृते न मित्रादपरः सहायकः ॥ २४ ॥

निपीय तद्वाग्विलसद्भुताग्वितं
ददावमुष्मै प्रमुखाय शेमुषीम् ।
महास्त्रशस्त्राक्रमणेन भूपतिं
वशंवदं कर्तुमनीश्वरोऽधुना ॥ २५ ॥

विधानमाश्रित्य नृपं पदच्युतं
कुरुष्व तस्मिंस्तव कार्यसाधनम् ।
न चेत्तु राष्ट्राधिपकोपभाजनो
भविष्यसीति [1]प्रतिपत्सुनिश्चिता ॥ २६ ॥

ततः समाहूतमहीपुरन्दरो
विवेकिभिर्भारतराज्यशासकैः ।
विशेषयानेन सदाशिवं स्मरन्
जगाम दिल्लीनगरं विनिर्भयः ॥ २७ ॥

गते च तस्मिन् नृपतौ स्वमासनं
विहाय तं घोषितवान् पदच्युतम् ।
त्रिवर्षदेशीयसुतात्मजं शिशुं
स मेदिनीनाथतया न्यतिष्ठिपत् ॥ २८ ॥

नृपासनारोहणजे महोत्सवे
[2]विधुत्रिवारं ज्वलनास्त्रनिःस्वनम् ।
निशम्य बन्धालयसंस्थिता जना
अवागमन् यत्किमपीह नूतनम् ॥ २९ ॥

---

१. प्रतिपत् बुद्धिः । २. ३१ ।

अकालजातां घटनां महीयसीं
विलोक्य सर्वत्र रुषाग्निमूर्च्छिताः ।
कुनीतिराणाधिपलानिराकृतौ
जना व्यधुः क्रान्तिमसीमपेषणाम् ।। ३० ।।

समर्थयन् क्रान्तिसिमां विभीषणां
जनैः कृतां भारतवर्षशासकः ।
नृपासनस्थस्य शिशोर्महीपतां
विधेर्विरुद्धां नियमैर्निराकृत ।। ३१ ।।

अशान्तिहेतिः परितोऽतिविस्तृता
नृणां महोपप्लविनां विचेतसाम् ।
विशिष्य राणातिकठोरमानसं
प्रकम्पयामास नितान्तभीषणा ।। ३२ ।।

तदन्तरे [1]खाहिवृषाब्जवत्सरे
दिसम्बरे मासि तृतीयवासरे ।
गजाह्वयस्थः सितवर्णडेनिगस्
ततः प्रतस्थे लघु काष्ठमण्डपम् ।। ३३ ।।

सदैव राणान्वयशासनोन्नतिं
समीहमानो हितकारकस्त्वसौ ।
सहायतार्थं किमपि व्यचेष्टत
परं न सेहे जनताऽस्य संस्थितिम् ।। ३४ ।।

पताकया श्यामलया तिरस्कृतः
प्रयाहि याहीति जनैर्विबाधितः ।
कथञ्चिदात्मानमवन् स दुर्मना
निवर्तयामास पुनर्गजाह्वयम् ।। ३५ ।।

---

१. १९५० ई० ।

ततो जनो भारतनेतृनिर्णयं
ससम्मदं स्वागतमात्मना गिरन् ।
जनेश्वरस्यागमनाय साग्रहं
निवेदयामास प्रधानमन्त्रिणे ।। ३६ ।।

स चान्ततोऽत्यन्तविबाधितो जनै-
र्विधाय सन्धिं पुनरेव भूमिपम् ।
उरीचकारामुमसीमतेजसं
[१]खदन्दशूकाकलुषेन्दुवत्सरे ।। ३७ ।।

विमानमारुह्य ततो गजाह्वयात्
स्वराजधानीं नरपाल आगतः ।
अभूतपूर्वं जनतन्त्रलिप्सुभि-
र्व्यगाह्ययं स्वागतमुत्तमं जनैः ।। ३८ ।।

शतं समा राज्यसमस्तशासनं
कठोरराणापरिवारहस्तगम् ।
[२]सुधांशुकाकोदरखण्डशीतगा-
वगाद् विरामं गिरिशानुकम्पया ।। ३९ ।।

नृपासनं भूषयतैव मन्त्रिणो
महीभृताऽघोषिषतानुभाविना ।
पुनश्च तत्रापि प्रधानमन्त्रिता-
मगान्नयाब्धिः सुमतिः स मोहनः ।। ४० ।।

तथापि राणा-जनतन्त्रकाङ्क्षिणोर्
न सर्वकारश्चलितः परस्परम् ।
अनल्पकालं, किमु वीक्षिता क्वचित्
सह स्थितिः सिंहकुरङ्गयोर्भुवि ।। ४१ ।।

---

१. १९५० ई० । २. १९५१ ई० ।

ततः प्रधानत्वमियाय मातृका-
प्रसादनामा जनतन्त्रनायकः ।
चचाल किंचिद्दिनमेव दुष्करं
तदीयनेतृत्वमपि प्रजाऽप्रियम् ॥ ४२ ॥

न कोऽपि राज्यस्य सुशासने क्षम
इति प्रलोक्याखिललोकवन्दितः ।
सितांशुकीर्तिर्जगतीपुरन्दरः
स्वयं निनायामलशासनं करे ॥ ४३ ॥

गृहीतहस्ताखिलराज्यशासनो
धराधिनाथो जनभद्रलालसः ।
प्रजास्वशान्तिज्वलनस्फुटार्चिषं
शशाम वाक्यामृतनिर्झरैर्द्रुतम् ॥ ४४ ॥

जनप्रसादाय दयार्द्रमानसो
विकासकार्येषु रुचिं प्रदर्शयन् ।
अशेषलोकैरभिनन्दितः प्रभु-
श्चिदालयं स्वच्छतमं विनिर्ममौ ॥ ४५ ॥

ग मागमस्याप्ययनं सुखप्रदं
निजेच्छयाऽयं नृपतिर्व्यधापयत् ।
विशेषशिक्षाग्रहणाभिलाषिणे
विदेश[1]-यानाय ददौ सहायताम् ॥ ४६ ॥

निजाधिकारैर्नहि कोऽपि वञ्चितो
न चोत्पथेऽङ्घ्रिं न्यदधात्कदाचन ।
सुखेन शान्त्या च समस्तमानवो
धराधिपत्वेऽस्य निनाय जीवनम् ॥ ४७ ॥

---

१. गमनाय ।

तदनु बहुदिनेभ्यो निर्विकासं विभासं
प्रकृतिसुभगदेशं प्रोन्नतं कर्तुकामः ।
स्वसुखनिरभिलाषो लोककल्याणहेतो-
रयमवनिमहेन्द्रो यत्नशीलो बभूव ।। ४८ ।।

इति श्री-पशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
त्रयोदशः सर्गः ।।



# चतुर्दशः सर्गः

प्रजासु शान्तासु महीपुरन्दरो
निकैतवानां निजदेशवासिनाम् ।
मनःस्थितिं साधुतया स वेदितुं
चकार बुद्धिं भ्रमणाय नीवृतः ॥ १ ॥

विवस्वदाभं मनुजैरभिष्टुतं
महीश्वरं पर्यटनाभिलाषिणम् ।
वगम्य जग्मुस्त्वरितं तदन्तिकं
गृहीतमाल्या नगरस्थिता जनाः ॥ २ ॥

अनङ्गदर्पघ्नममुष्य कायिकं
विलोक्य सौन्दर्यमलौकिकं मुहुः ।
अमन्दमानन्दमुपस्थिता जनास्
तथान्वभूवन्नधना यथा निधिम् ॥ ३ ॥

विलोकनेनैव शुभंयुकर्मणो-
ऽवनीपतेस्तस्य गताः कृतार्थताम् ।
जयेतिशब्दैर्मिलितैः परस्परं
चकार लोको गगनं सुगुञ्जितम् ॥ ४ ॥

कृतप्रणामाननुयायिनो जनान्
निवर्त्य शेषान् दयितान् दयार्णवः ।
द्विजातिदत्तां सुखदां शुभाशिषं
प्रसन्नचेताः प्रभुरग्रहीन्नतः ॥ ५ ॥

नृपेण सार्धं महिषी श्रियान्विता
प्रतप्त-कार्तस्वर-भास्वराम्बरा ।
मधुव्रत-श्यामल-चूर्णकुन्तला
पयोधिकन्येव बभौ मुरारिणा ।। ६ ।।

समागतानामभिवादनं स्मिता-
ननोऽग्रहीद्रक्षसुरक्षितो नृपः ।
तुरङ्गमारुह्य सदागतिस्पदं
ततः प्रतस्थे रमणीयदर्शनः । ७ ।।

कुरङ्गरम्येक्षणयाऽत्र वर्त्मनि
प्रगाढपीनस्तनभारनम्रया ।
सभार्यमीशं प्रसमीक्षितुं गृहं
विहाय तस्थे द्रुतमुत्कया स्त्रिया ।। ८ ।।

नरा युवानो लघुपत्तनस्थिता
धृताब्जमाल्या नवयौवनार्चिताः ।
मनोरमाश्चाप्यवनीपदर्शनं
नितान्तसौभाग्यकरं सुमेनिरे ।। ९ ।।

यथाऽऽत्मतत्त्वं समवेक्ष्य योगिनो
भवन्ति मोदाब्धिविमग्नचेतसः ।
तथाऽऽगताः शौरिनिभं धराधिपं
जनाः समालोक्य ययुः प्रसन्नताम् ।। १० ।।

द्रुतं प्रयान्त्या रमयेव रम्यया
कुशाङ्कुरैर्विद्धपदाग्रभागया ।
कया चिदेणीक्षणया महीपते-
रदर्शनैः स्वीयविधिर्विनिन्दितः ।। ११ ।।

क्वचित्पुरेऽत्यन्तदृढं कृषीवलं
हलेन कर्षन्तमिलां महातपे ।
क्वचिच्च सस्याद्यसिताभमेदिनीं
ददर्श सर्वाङ्गमनोहरः प्रभुः ॥ १२ ॥

पुरेऽन्यतः खञ्जनगञ्जनेक्षणां
भृगोदकैः पूर्णघटं स्वमूर्धनि ।
निधाय यान्तीं तरसा निकेतनं
व्यवालुलोकत्स्त्रियमद्रिजां नृपः ॥१३॥

गृहीतगन्धाक्षतपुष्पदीपकाः
सृतिं स्थिता ग्राम्यजनास्तदन्यतः ।
प्रसेदुषस्तस्य नृपस्य निष्ठया
समर्चनं चक्रुरिव श्रियः पतेः ॥ १४ ॥

स आर्यगृह्यः सुगृहीतपूजनः
ततः प्रतस्थे पुरतः शनैः शनैः ।
पुरान्तरेऽप्येवममुष्य सत्कृतिं
जना व्यधुर्लोकपतेः सबान्धवाः ॥ १५ ॥

महोन्नतग्रावजशाखिनां चयै-
रसङ्ख्यकैर्भिन्नविधैः सुशोभिता ।
मनस्विनस्तस्य नृपस्य संसृतिः
प्रसह्य सद्यो व्रजतोऽहरन्मनः ॥ १६ ॥

गतेऽस्तमर्केऽम्बरमाशु गच्छतां
पतत्रिणां मन्द्ररवं श्रुतिप्रियम् ।
निशम्य चन्द्राभिधरम्यपर्वतं
सुखं निशाऽनीयत भूभृता सता ॥ १७ ॥

अनेकवेदादिमनुप्रबोधित-
स्तमोपहे यात्युदयं नभोऽङ्गणे ।
प्रमृज्य नेत्रे पयसा स्मरन् शिवं
विहाय शय्यामुदतिष्ठदीश्वरः ॥ १८ ॥

विलोक्य प्रातः सुषमामलौकिकीं
व्यचिन्तयच्छान्तमनाः सुखाकरः ।
अहाऽधुनैन्द्री दिगियं दिवाकरा-
रुणप्रकाशैररुणेव दीप्यति ॥ १९ ॥

द्विरेफमालाः परितोऽतिनिर्भयाः
भ्रमन्ति पुष्पेषु मरन्दलोलुपाः ।
रसालपीतद्रुमगाश्च कोकिला
हरन्ति चेतः प्रसभं कलस्वनैः ॥ २० ॥

परागमादाय रसालशाखिनां
पदे पदेऽन्धान् विदधन्मधुव्रतान् ।
प्रपातपानीयनितान्तशीतलः
प्रवाति वातो जनतापनोदकः ॥ २१ ॥

परस्परालापनितान्ततत्परा
गृहीतदण्डा जरया गृहीताः ।
शरीरनैरुज्यकृते दिवामुखे
भ्रमन्ति सामोदमिलाध्रवासिनः ॥ २२ ॥

निधाय दोर्मूर्ध्नि हलं कृषीवलः
पुरो वृषौ यष्टिकयाऽभिचालयन् ।
विलम्बितत्वादभियाति रंहसा
ससम्भ्रमं क्षेत्रमतीवदुर्गमम् ॥ २३ ॥

---

१. पर्वतः ।

स इत्थमुर्वीपतिरद्रिसम्भवां
प्रभातशोभामवलोकयन्मुहुः ।
तुरङ्गमारुह्य सशस्त्ररक्षकैर्
वृतः प्रतस्थे दिशि मध्यनीवृतः ॥ २४ ॥

दिनद्वये मार्गमतीत्य पार्वतं
स भूमिजानिः परमं सुदुर्गमम् ।
अनन्तलक्ष्मीपरिशोभिताञ्चलं
विवेश मध्यं विषयं महापगम् ॥ २५ ॥

क्रमेण सर्वत्र सुधासुसिक्तया
प्रमण्डलस्थां जनसंहतिं गिरा ।
विबोधयामास स मानवेश्वरो
विमुक्तचेता निजमाशयं स्फुटम् ॥ २६ ॥

अनेकभागानवलोकयन्नसा-
वदृष्टपूर्वां मिथिलां वसुन्धराम् ।
ददर्श, योर्वीसुतया विभातया
व्यधायि पूताङ्घ्रिसरोजधूलिभिः ॥ २७ ॥

विहाय यानं जविनं तुरङ्गमं
स वाष्पयानं श्रितवान् महीपतिः ।
जलेश्वराख्यं नगरं निशामुखे
समेत्य सर्वामनयन्निशीथिनीम् ॥ २८ ॥

दिने परस्मिन् महसा महोज्ज्वलो
धराधिनाथः शिवलिङ्गमम्बुगम् ।
समर्च्य गन्धाक्षतपुष्पदीपकैः
प्रतस्थिवान् रम्यविदेहपत्तनम् ॥ २९ ॥

पुरं तदीयं समवाप्य भूमिपो
यथोपचारं जनकाङ्गजापतिम् ।
समर्च्य लोकाकुलभूमिभागा-
मगात्समज्यां बहुवर्णसज्जिताम् ।। ३० ।।

सुदूरदेशात्तमवेक्षितुं जना:
समागता राजमणिं दयार्णवम् ।
सभां गतस्यास्य जयेतिनिस्वनैर्
व्यधुः परामादृतिमिद्धतेजसः ।। ३१ ।।

विबोधयंस्तत्र सभागताञ्जना-
न्महीपतिर्वाचमुवाच कोमलाम् ।
परं प्रसीदामि विलोक्य संस्कृतां
भवादृशीमात्मसुशासितां प्रजाम् ।। ३२ ।।

यथा शुकः पञ्जरगोऽतिदुःखितो
मनोऽनुकूलाचरणेऽक्षमोऽनिशम् ।
तथैव बद्धोऽहमभूवमक्रियः
कठोरराणापरिवारशासनैः ।। ३३ ।।

विमुक्तबन्धः प्रकृतिस्थितोऽधुना
त्वदीयमध्येऽनुभवामि गौरवम् ।
श्रमोपलब्धा महती स्वतन्त्रता
सदाभिरक्ष्या प्रजया समस्तया ।। ३४ ।।

यथैकचक्रः शकटो भुवस्तले
प्रयाति नो राष्ट्रमिदं बृहत्तथा ।
अतः प्रजेशप्रजयोरनिष्क्रियो
न जातु हेयः सहयोग उत्तमः ।। ३५ ।।

प्रजाहितं वाञ्छति यो न भूमिपो
महीपता तस्य कलङ्कपङ्किला ।
पुरायुगेऽपीदमवेक्ष्य शास्त्रवि-
न्नृपोत्तमो राज्यमनुत्तमं व्यधात् ॥ ३६ ॥

स्मृतिं तदीयामनुसृत्य शासनं
विधातुकामोऽस्मि सुशास्त्रसम्मतम् ।
शुभाशिषा भूसुरदेवगोविदाम्
नृपेति शब्दो मयि भासतां सदा ॥ ३७ ॥

अहं सदेच्छामि विमुक्तचेतसा
ममाधिपत्ये सकलाः प्रजाजनाः ।
त्रितापहीनाः प्रचुरैर्धनैर्युताः
निरामयाः सन्तु सदा शिवानुगाः ॥ ३८ ॥

इति प्रबोध्याखिललोकनायको
दृढव्रतो धर्मपथानुसंश्रितः ।
स्वराजधानीं समुपेत्य रुग्ग्रहै-
र्विबाधितो व्याकुलमानसोऽभवत् ॥ ३९ ॥

निरापदां राजसुतत्रयात्मिकां
विमर्शदात्रीं समितिं परिष्कृताम् ।
विधाय शारीरिकरोगनुत्तये
जगाम देशान्तरमाशु भूमिपः ॥ ४० ॥

उपात्तनेतृत्वपदात्स मातृका-
प्रसादनामा नयविच्छिरोमणिः ।
परस्परद्वेषनिमित्तदुःखितो
विमुक्तिपत्रं नृपसूनवे ददौ ॥ ४१ ॥

पित्रा समं युवनृपोऽपि विमृश्य सम्यक्
तत्त्यागपत्रमुररीकृतवान्महेन्द्रः ।
'वेदाहिधर्मरजनीशमितेशुवर्षे
जग्राह राज्यनिखिलाधिकृतिं स्वपाणौ ॥४२॥

भूपोऽत्यसाध्यरुजया परिपीडिताङ्गः
सम्यक्तयाऽगदकरेण चिकित्सितोऽपि ।
न स्वास्थ्यलब्धिमकृत प्रणतान्तरात्मा
वामे विधौ भवति वाममयं हि विश्वम् ॥४३॥

त्यक्त्वाऽसुमोहमनिशं गिरिशाब्जपाद-
युग्मं स्मरन् भवसमुद्रनिमग्नजीवान् ।
उद्धर्तुमीशमनघं सुखमूलमीड्यं
हित्वा भुवं सुरपुरीमगमन्महीपः ॥ ४४ ॥

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये

चतुर्दशः सर्गः ॥



१. १९५४ ई० ।



श्री ५ महाराजाधिराज महेन्द्र वीर विक्रम शाहदेव।

# पञ्चदशः सर्गः

नृपासनस्थोऽथ बभूव राज्ञो
ज्यायांस्तनूजो नयशास्त्रविज्ञः ।
महेन्द्रनामा श्रुतविश्वधामा
पितेव लोकप्रिय आत्मनिष्ठः ॥ १ ॥

ह्रासोन्मुखं राज्यमवेक्ष्य खिन्नो
राजाधिराजोऽयमनल्पतेजाः ।
विमर्शदात्र्याः समितेः समक्षे
प्राकाशयच्चेतसि जातभावम् ॥ २ ॥

पुरा भवद्भिः स्थिरचित्तवृत्या
राज्यं समृद्धं नितरां विधित्सोः ।
निर्धार्यमाणां मम नीतिमेतां
निशम्य पश्चात्स्वमतं प्रदेयम् ॥ ३ ॥

अस्वापतेयो जनतन्त्रमार्ग-
मनुश्रयन्नेष लघिष्ठदेशः ।
निरन्तरायं प्रगतिं विदध्या-
दित्येव चेतस्यनिशं समीहा ॥ ४ ॥

परं तदर्थं नृपनीतिविज्ञा
दुर्भागधेयाद्विफलप्रयासाः ।
परस्परद्वेषकपीटयोनि-
ज्वालावलीढाः शिथिला बभूवुः ॥ ५ ॥

देशः समेषामिति भावयद्भिर्
दलीयभावं परिहाय सर्वैः ।
सम्भूय तस्य प्रगतिर्विधेया
स्वयं कृतं कर्म नरो हि भुङ्क्ते ॥ ६ ॥

वर्षाणि चत्वारि गतानि वादे
नावेक्षिता केष्वपि नीतिवित्सु ।
सद्भावना, तेन निजाधिकारे
विबाधितः शासनमग्रहीषम् ॥ ७ ॥

सभासदामस्ति विशेषलक्ष्य-
मन्योन्यसौहार्दमुपाश्रितानाम् ।
परिश्रमासादितलोकतन्त्रं
दृढं प्रकुर्युर्विषमेऽपि काले ॥ ८ ॥

निर्वाचिता यावदिह प्रजाभि-
र्मान्याः सदस्या नहि सर्वकारम् ।
निर्मान्ति तावद् विषयप्रगत्यै
हेयं समित्या न विमर्शदानम् ॥ ९ ॥

स्वार्थं जहद्भिः समितेः सदस्यै-
रालक्ष्य देशोन्नतिमत्र कार्यम् ।
सम्पादनीयं मनसा गिरा च
न चावहेल्यो जनताभिलाषः ॥ १० ॥

न कोऽपि देशो विषयान्तरेभ्यो
विनैकलः स्थातुमलं जगत्याम् ।
तत्स्थापनीयः खलु सर्वदेशैः
सौहार्दभावो य इहास्त्यपेक्ष्यः ॥ ११ ॥

तटस्थतानीतिमनुश्रयन्त्या-
ऽनया समित्या प्रगतिर्विधेया ।
पराङ्मुखीभूय न चोपवेश्यं
युगानुरूपं नहि तद्धि कार्यम् ॥ १२ ॥

नीत्याऽनयाऽन्यैः सह सख्यभावं
विकासमाप्तैर्विषयैर्विवर्ध्य ।
धनान्यवाप्य प्रचुराणि तेभ्यो
विकासकार्यं करणीयमद्य ॥ १३ ॥

विज्ञानमार्गेऽतिनदीष्णदेशै-
रमेरिकादिप्रमुखैर्मदीयाम् ।
अभ्यर्थनामभ्युपगम्य नैजं
वैज्ञानिकं दातुममन्यतारम् ॥ १४ ॥

वैज्ञानिकक्षेत्रविशेषबोध-
प्रशिक्षणार्थं प्रहिताः प्रबुद्धाः ।
छात्रा विदेशेऽध्ययनेषु लग्ना-
श्चिदं स्वकीयां परिवर्धयन्ति ॥ १५ ॥

प्राक्कालतः [1]साप्तपदीनमस्य
नितान्तहृद्यं सह भारतेन ।
यदावयोः संस्कृतिलक्ष्यनीति-
सद्भावनाः सन्ति समानभाजः ॥ १६ ॥

सहस्थितत्वादितरानपेक्ष्य
साहाय्यमस्यार्थिकमस्त्यदभ्रम् ।
न कोऽपि लोके प्रतिवेशिदुःखं
सोढुं हि शक्तः सुमनाः कदापि ॥ १७ ॥

---

१. मैत्रीम् ।

असङ्ख्यका नागरिका मदीया
भ्रमन्ति भूम्यां निजबोधवृद्धयै ।
वैदेशिकाश्चापि सहानुभूतिं
परस्परं साध्वभिदर्शयन्ति ।। १८ ।।

यश्चोन्नतोऽस्यां भुवि भव्यदेशो
निगद्यते विश्वजनीन एव ।
विना विबन्धं विदधीत विष्वक्
साहाय्यकार्यं स विमुक्तहस्तः ।। १९ ।।

विकासशीलोऽपि न जातु मुञ्चेत्
सहायतामुन्नतदेशदत्ताम् ।
देशाभिवृद्धयै नृपनीतिविज्ञै-
रमन्यतैषा युगधर्मवृत्तिः ।। २० ।।

साहाय्यमादाय विभिन्नदेशात्
संस्थापिता यैर्न च कूटनीतिः ।
ते निन्दनीया जगतीतलेऽस्मिन्
परं न देशो मम तादृगस्ति ।। २१ ।।

समृद्धया राष्ट्रियसंस्थयापि
प्रदीयतेऽस्मै सहयोग आप्यः ।
प्रयत्नशीलोऽस्ति च राष्ट्रसङ्घ-
सदस्यतां प्राप्तुमसावविघ्नम् ।। २२ ।।

अमेरिकाभारतचीनमुख्यैर्
देशैः समं स्थापितदौत्ययोगः ।
ममैष देशोऽनुदिनं समृद्धिं
शनैः शनैर्गच्छति साभिमानः ।। २३ ।।

सम्बन्धमेनं सुदृढं विधाय
देशैः समं सन्निधिगैरतीतम् ।
संस्थापनीयो निकटे भविष्य-
त्काले दविष्ठैरपि योग एषः ॥ २४ ॥

प्रभुत्वमेतस्य सदाऽभिरक्ष-
न्नास्थाय सर्वैः सह सख्यभावम् ।
ताटस्थ्यनीत्या प्रगतिं प्रकुर्या-
देषा मदीया परराष्ट्रनीतिः ॥ २५ ॥

अतीवशोच्या स्थितिरार्थिकी मे
येनास्मदीयो रमणीयदेशः ।
नैर्धन्यमाप्नोति तथाप्यजस्रं
तच्छोधनार्थं यतनीयमेव ॥ २६ ॥

स्थानेष्वनेकेषु विशेषविज्ञा-
श्चिकित्सकाः साधुतया चिकित्साम् ।
कुर्वन्ति, [1]जायुं वितरन्ति चार्थैर्
हीनाय लोकाय यशोभिलाषाः ॥ २७ ॥

स्वार्थापरक्तः कुशलोऽधिकारी
साहाय्यमन्यैः कृतमाप्य सम्यक् ।
स्वसाधनेनात्र चकार वाढं
तदुन्नतिं स्वास्थ्यविभागबद्धः ॥ २८ ॥

राज्येऽस्मदीये विधिवच्चिकित्सा-
लयाय साहाय्यमदाददभ्रम् ।
विवेककृद्धारतसर्वकारो
वर्धापनार्होऽस्ति तदर्थमेषः ॥ २९ ॥

---

१. औषधिम् ।

रूसादिदेशैरपिसाधुचित्तैर्
भैषज्यसाहाय्यमदाय्यनेकम् ।
प्राणान्तकव्याधिनियन्त्रणाय
संस्थाप्यनेका जगतः सहाया ॥ ३० ॥

राणान्वयीयेन प्रधाननेत्रा-
ऽत्युपेक्षितां वीक्ष्य जनेषु शिक्षाम् ।
देशान्तरस्थैः खलु नेतृवर्गै-
रालोच्यते सन्ततमेष देशः ॥ ३१ ॥

अतोऽस्मदीयैरधिकारिवर्गैः
शिक्षाप्रचारस्य समस्तराज्ये ।
सुचारुरूपेण कृतः प्रबन्धः
प्रजास्वसन्तोषशिखाप्रशान्त्यै ॥ ३२ ॥

मुख्ये पुरे स्थापितराजकीय-
विद्यालये निर्धनतीक्ष्णबालाः ।
निःशुल्कशिक्षामधिगम्य तुष्टाः
सन्तीति सर्वत्र विलोकयामि ॥ ३३ ॥

समृद्धवर्गा अपि यत्र तत्र
साहाय्यमादाय च राजकीयम् ।
विद्यानिकायं युगपत्तनान्तर्
न्यतिष्ठिपन् साध्वसमुक्तचित्ताः ॥ ३४ ॥

क्षेत्रे समस्ते नितरां विकासं
सम्प्राप्नुयाद्देशविशेष एषः ।
इत्येव याचे भगवन्तमीशं
दद्यात्समित्यै स शुभां मनीषाम् ॥ ३५ ॥

इत्युक्तवन्तं नृपतिं सदस्याः
सभास्थिताः प्रोचुरतीवसारम् ।
भवादृशं भूपतिमाप्य राजन् ।
वयं कृतार्थाः स्म इहत्यभूम्याम् ॥ ३६ ॥

विवेकशीलं गुणवन्तमीशं
विलोक्य के स्युर्न गुरुत्वभाजः ।
अद्यत्वकाले जनभव्यमिच्छुर्
भवत्यवन्यां विरलश्च कोऽपि ॥ ३७ ॥

देशे विदेशे भ्रमणं विधाय
ज्ञानं विशेषं समवाप्य सम्यक् ।
जातो भवान् भूपनये नदीष्णो
यन्मन्यते विश्वनयज्ञवर्यैः ॥ ३८ ॥

सर्वात्मनाऽयं हि विकासदिक्षु-
स्थितोऽस्ति देशस्तव भूपतित्वे ।
आशास्यतेऽल्पीयसि काल एव
सम्पन्नतामाप्स्यति भूमिपाल ॥ ३९ ॥

सिंहासनारोहणकाल एव
जुघोष तारं विधिवत्प्रजासु ।
ययौ पथा येन पिताऽस्मदीय-
स्तमेव पन्थानमनुश्रयिष्ये ॥ ४० ॥

इत्थं पृथिव्यां पितुरङ्घ्रिचिह्ने
सम्यक्तया गन्तुमुदैस्त्वमेव ।
को नाम नाऽस्मिन् धरणीश काले
विनिश्छलस्तातनिदेशपालः ॥ ४१ ॥

अमेरिकाभारतरूसचीन-
देशेभ्य आसाद्य वसूनि राजन् ।
निर्मापिता राजपथा ह्यनेके
त्वया महीध्रेषु दृढाश्मयुक्ताः ॥ ४२ ॥

सर्वोच्चशिक्षाधिगमाय धान्यां
संस्थाप्य तारापथचुम्बितारम् ।
पितुः स्मृतौ भूमिप ! विश्वविद्या-
लयं तदाख्यालसितं यशोऽयाः ॥ ४३ ॥

प्राचीननिर्वाचनवर्त्म राजन् !
सदोषमालोक्य तिरश्चकर्थ ।
पञ्चायताध्वानमनुश्रयंस्त्वं
ररक्षिथानाविललोकतन्त्रम् ॥ ४४ ॥

पूर्वाञ्चले शैलविनिर्गतायाः
धुन्या-जवायाः कुशिकात्मजायाः ।
आवद्धय धारां कृषिविद्युदादि-
विकासकार्याय समुद्यतोऽसि ॥ ४५ ॥

आकाशवाण्यादिनवीनयन्त्रं
बहुव्ययैः साध्यमतीवरम्यम् ।
स्थानेष्वनेकेषु धराधिनाथ !
न्यतिष्ठिपस्त्वं जन-शात[1]-कामः ॥ ४६ ॥

यदस्ति शेषं नृपते ! तदर्थं
प्रयत्नशीलस्त्वमसीह काले ।
आशास्यते प्रोन्नतिमाशु गच्छेत्
त्वदाधिपत्ये ननु देश एषः ॥ ४७ ॥

---

१. सुखम् ।

अन्योन्यमाभाष्य गतेषु तेषु
राजापि विश्रामकृते जगाम।
कियत्सु कालेषु गतेष्वकस्माद्
धा हन्त भूपोऽमरलोकमापत् ॥ ४८ ॥

गते च तस्मिन् नृपतौ महेन्द्रे
नम्रो दयावानतिकर्मशीलः।
वीरेन्द्रनामा तनयस्तदीयो
नेपालराज्याधिपतामनैषीत् ॥ ४९ ॥

सम्पाद्य तच्छ्राद्धविधिं विधानैः
सम्वत्सरं यावदयं सशोकः।
गुरोर्निदेशादुदधिस्वभावो
व्यधत्त कर्माणि न मङ्गलानि ॥ ५० ॥

तदुत्तरं मन्त्रिवरैर्विचार्य
तस्याभिषेकाय कृतप्रयत्नैः।
आकारिताः पौरजना विधिज्ञा
परिष्कृतां कर्तुमिलेशधानीम् ॥ ५१ ॥

नवीनमुद्वेदि विमानमब्धि-
स्तम्भाश्रितं दीप्तिमदिन्दुकान्तैः।
प्रकल्पयामासुरतीव रम्य-
मस्याभिषेकाय सुशिल्पिना ते ॥ ५२ ॥

तदुत्सवे नीतिविदो महीपा
नवीनवस्त्राभृतिभूषिताङ्गाः।
राष्ट्राधिपा विश्वगता समेत्या-
लञ्चक्रिरे राजगृहं सुरम्यम् ॥ ५३ ॥

जनाश्रये काञ्चनवज्रलग्न-
स्तम्भाश्रिते मञ्चगता नरेशाः ।
श्रुत्युक्तमार्गैरभिषेककृत्य-
दिदृक्षयाऽऽसन्नतिलोलचित्ताः ॥ ५४ ॥

वरासनेऽधिष्ठितमेनमीशं
तीर्थाम्बुभिः स्वर्णघटेषु पूर्णैः ।
दीर्घायुषं तस्य समीहमानाः
सुमन्त्रिणः साधुतयोपतस्थुः ॥ ५५ ॥

मन्द्रस्वनैरानकदुन्दुभीनां
नानाविधानां हतपुष्कराणाम् ।
व्यतर्कयन् भावुकमेतदीय-
मबाधसन्तानमुपेतलोकाः ॥ ५६ ॥

नीराजनां प्लक्षतरुत्वगब्ज-
दुर्वाङ्कुराभिन्नपुटैः समेताम् ।
कृतामयं प्राप कुलप्रवृद्धैः
समीहमानैरनिशं प्रशस्तम् ॥ ५७ ॥

पुरोहिताद्याः श्रुतिशास्त्रविज्ञा
द्विजातयो वैदिकधर्मसेतुम् ।
प्रारेभिरे प्रागभिषेक्तुमेन-
मथर्वमन्त्रैर्विधिवज्जिगीषुम् ॥ ५८ ॥

महाप्रवाहा नतमस्तकेऽस्या-
भिषेकलक्ष्मीरनिशं पतन्ती ।
सशब्दमीशस्य सुरापगेव
व्यरोचताशेषजगच्छुभेच्छोः ॥ ५९ ॥

तस्मिन् क्षणे वन्दिजनैरनेकैः
संस्तूयमानोऽखिललोकपूज्यः ।
अलक्ष्यताऽयं ह्यभिनन्दितोऽब्द-
स्तृषार्तनादैरिव चातकौघैः ॥ ६० ॥

प्रकुर्वतोऽमुष्य शुचिं पयोभिः
सुमन्त्रपूतैः सुषमाऽनवद्या ।
सौदामनस्येव कृपीटयोनेर्
वृष्टेर्निषेकाद् ववृधेऽतिवेलम् ॥ ६१ ॥

अन्तेऽभिषेकस्य महाप्रभावो
वसून्यलभ्यान्यददाद् द्विजेभ्यः ।
तेऽप्याशिषं प्रीतमनोभिरस्मै
प्रादुः प्रजापालनशक्तिरूपाम् ॥ ६२ ॥

बद्धांश्चिरं बन्धगृहाद् विमुक्तान्
बध्यानबध्यानतिहिंस्रवृत्तीन् ।
क्रीडाविहङ्गांश्च विमुक्तबन्धान्
समादिशत्कर्तुमसौ महीशः ॥ ६३ ॥

कक्ष्यान्तरस्थं गजराजदन्तैः
प्रकल्पितं पीठमतीव शुभ्रम् ।
अध्यास्त जिष्णुर्जगदद्वितीयः
प्रसाधनोरीकृतये महीशः ॥ ६४ ॥

प्रसाधकाः पुष्करशुद्धहस्ताः
प्रसाधनैर्नैकविधैः सुगन्धैः ।
व्यभूषयंस्तस्य शिवं शरीरं
नवीनराज्यश्रियमाप्तुमिच्छोः ॥ ६५ ॥

तेऽमुष्य मुक्तागुणबद्धमौलि-
मन्तःस्रजं कान्तिमदब्जरागैः ।
प्रत्यूपुरेवं नवचन्दनेन
सुगन्धिनाऽलं व्यधुरङ्गरागम् ॥ ६६ ॥

नानाविधालङ्कृतिमच्छरीरो
हंसाङ्कवासोभृदपूर्वशोभः ।
प्रेक्ष्यो भृशं नूतनराज्यलक्ष्मी-
वधूवरोऽभूदयमिद्धतेजाः ॥ ६७ ॥

स राजचिह्नाकुलपाणिपद्मै-
रालोकशब्दं मुहुरुच्चरद्भिः ।
पार्श्वस्थितैराश्वनुगम्यमानो
ययौ सभामण्डपमिन्द्रकल्पः ॥ ६८ ॥

शेषाकृतिं तत्र सुतप्तहेम-
विनिर्मितं पैतृकमासनं सः ।
महीपचूडामणिघृष्टपाद-
पीठं समाशिश्रियदब्धिधीरः ॥ ६९ ॥

तत्रास्थितोऽशेषजनाभिनन्द्यो
हतान्तरायो गणराजतुल्या ।
शेषश्रितो विष्णुरिवापरोऽयं
रराज मध्येसभमुग्रतेजाः ॥ ७० ॥

अत्रान्तरे कोऽपि विपश्चिदन्यो
गैर्वाणवाण्यां रचितैः सुपद्यैः ।
विद्यानुरागं महसा ज्वलन्तं
स्तोतुं समारब्ध महीशमेनम् ॥ ७१ ॥



श्री ५ महाराजाधिराज वीरेन्द्र वीर विक्रम शाहदेव
तथा श्री ५ महाराज्ञी ऐश्वर्य राज्यलक्ष्मी देवीशाह।

विद्यावैभवभूरिभूषिततनू राजेन्द्रचूडामणिर्
दीव्यत्पार्वणशर्वरीश्वरयशा मान्यो वदान्यो नृभिः ।
लोकाचारविचारसारचतुरो भास्वत्प्रतापावलिर्
नेपालाभिजनेश्वरो विजयते वीरेन्द्रभूपो भुवि ॥ ७२ ॥

सत्यासत्यविवेकशीलनपरो दाने च कर्णोपमो
दीनानामभिरक्षणे न विरतो लोकप्रियो धार्मिकः ।
विद्वन्मानससारसालिमधुपो वाग्मीव वागीश्वरो
नेपालाभिजनेश्वरो विजयते वीरेन्द्रभूपो भुवि ॥ ७३ ॥

राजन्यैरभिरनन्दितो मतिमतां वृन्दैः सदा मण्डितो
लोकानामनुरञ्जने दृढमतिः कारुण्यरत्नाकरः ।
वाचा कोमलया सुधामधुरया सम्बोधयन् स्वां प्रजां
नेपालभिजनेश्वरो विजयते वीरेन्द्रभूपो भुवि ॥ ७४ ॥

देशस्यास्य विभूषणं श्रुतिकथागीताविभिर्बोधितः
प्राचीनाखिलनीतिशास्त्रनिपुणो नारायणांशः स्वयम् ।
नानादेशविदेशसङ्गतिविधौ चातुर्यमासादयन्
नेपालाभिजनेश्वरो विजयते वीरेन्द्रभूपो भुवि ॥ ७५ ॥

प्रोद्यद्गर्वसमस्तशात्रवकुलं सम्मीलयंस्तेजसा
सत्कीर्त्याऽवनिमण्डले गुणिगणे ख्यातिं च विस्तारयन् ।
राज्यस्थाः सकलाः प्रजा भृतिवहाः सत्कर्मणा रञ्जयन्
मार्तण्डान्वयदीपकोऽवनिपते ! संराजसे चाधुना ॥ ७६ ॥

राज्यं सुशासति भवत्यखिला मनुष्याः
स्वस्था भवन्तु न च के चन धान्यहीनाः ।
गृह्णन्तु नो भृतिवहा वसु नीतिहीनं
सर्वे भवन्तु सुखिनः प्रगतिं च कुर्युः ॥ ७७ ॥

[1]श्री-लोक-पावन-रघुरम्यभुजङ्गहारे
भक्तिः सदा गिरिजजानुः-कमलास्यभृङ्गे ।
जीयात्समाः सदयतां हृदये दधानो
वीरेश्वरो जगति रम्यमहीमहेन्द्रः ॥ ७८ ॥

इत्थं सुपद्यैरभिनन्द्य तस्मिन्
गतेऽथ नूत्नो वसुधाधिनाथः ।
देशान्तराभ्यागतराजवर्गान्
व्यसर्जयत् वस्त्रधनैः प्रतोष्य ॥ ७९ ॥

वर्षत्रयानन्तरमेव तस्य
महीपतित्वे सकलं सुराज्यम् ।
[2]भार्गर्षिभाग्यद्विजराजवर्षे
सामूहिकान्दोलनवह्निलीढम् ॥ ८० ॥

परम्पराभ्यागतराजतन्त्रं
वैदेशिकाः सोढुमशक्नुवन्तः ।
छात्रान् पुरस्कृत्य सुशस्त्रसज्जान्
भयङ्करीं क्रान्तिमकारयंस्ते ॥ ८१ ॥

क्रान्त्याममुष्यामधिराज्यसम्पद्-
विनाशिता छात्रवलैरवध्रा ।
येनाधिराजस्य मनो नितान्तं
विषादमापज्जनभद्रभाजः ॥ ८२ ॥

ज्ञात्वापि नानादलनेतृवर्गैः
संचालितां क्रान्तिमतीव तीव्राम् ।
चेतोऽदसीयं चलितं न किंचिन्
न मुच्यते सत्पुरुषैर्हि धैर्यम् ॥ ८३ ॥

---

१. प्रथमचतुर्थपादयोराद्यन्तयोः स्थूलकृष्णाक्षरैः श्रीवीरेन्द्रः इति चतुर्णां पादानां मध्येषु च सुजयति इति बोध्यम् ।

२. १९७९ ई० ।

न चाभिभाव्या बहुशस्त्रयुक्तैर्
बलैरियं क्रान्तिरमोघशक्तिः ।
तत्पूरणीया जनताभिकाङ्क्षा-
ऽन्यथा विनाशं विषयोऽधिगच्छेत् ॥ ८४ ॥

इत्येव राजा प्रविचार्य रात्रौ
विना विमर्शं निजबन्धुवर्गैः ।
आकाशवाण्या जनतापशान्त्यै
निर्व्याजवाचं प्रससार तारम् ॥ ८५ ॥

किं वाञ्छतीयं जनता मदीया
दलान्वितं निर्दलमेव किम्वा ।
यच्छासनं सा मनसाऽभिवाञ्छेत्
तदेव नूनं मयकाभ्युपेयम् ॥ ८६ ॥

पक्षद्वये स्वीयमतप्रयोगं
कुर्वन्तु लोकाः परिहाय भीतिम् ।
यश्चापि पक्षो भविता विजेता
स एव निर्मास्यति सर्वकारम् ॥ ८७ ॥

निर्वाचितैरेव सदस्यवर्गै-
र्निर्वाचितः स्यात्खलु मन्त्रिमुख्यः ।
स एव निर्वक्ष्यति संसदीयां
कार्यप्रणालीं नियमानुसारम् ॥ ८८ ॥

निर्वाचनानन्तरमेव शीघ्रं
संशोधनं स्यादिह संविधाने ।
मूलाधिकारस्य हृतिर्न यस्मिन्
भवेज्जनानामिति सत्यघोषः ॥ ८९ ॥

सन्देशवाचं सुखशान्तिदात्रीं
श्रुत्वा महीपस्य जना जहर्षुः ।
अशान्तिहेतिः क्षणमेव शान्ता
विना बलैरुग्रपथैः समन्तात् ॥ ९० ॥

अयं ज्वलन्तं विषयं कृशानौ
ररक्ष चातुर्यबलैरनिन्द्यैः ।
येनास्य सर्वत्र विवेकबुद्धि-
प्रशंसनं चक्रुरतीव विज्ञाः ॥ ९१ ॥

तच्चातुरीं वीक्ष्य वदन्ति लोकाः
धन्योऽधिराजोऽभिररक्ष देशम् ।
नो चेदिरानस्थितिरत्र देशे
वार्या न कैश्चित्कुशलैर्नयज्ञैः ॥ ९२ ॥

पक्षद्वये जनमतावगमाय राज्ये
निर्वाचनं समभवत्सविधानमाशु ।
यस्मिंश्चिरागतसुनिर्दलपक्ष एव
साफल्यमाप जगदीशकृपाकटाक्षैः ॥ ९३ ॥

## आशीर्वचनम्

आशासे जनतन्त्रपद्धतिरियं संस्थापिता पूर्वजैः
त्वत्काले फलिता भविष्यतितरां वीरेन्द्र पृथ्वीपते ।
राज्यस्थाः सकलाः प्रजाः प्रमुदितास्त्वद्भूपतायां भृशं
भूयासुः सकलाधिरोगरहिताः श्रेयांसि चात्याप्नुयुः ॥९४ ॥

शाकाब्दे विधुशून्यभाग्यरजनीनाथे[1] मधावर्जुने
पञ्चम्यां रविवासरे जनकजाभूमौ स्थितो मैथिलः ।
कृष्णानन्दतनूद्भवः पशुपतिस्तोषाय नैजात्मनः
काव्यं संस्कृतवाङ्मयं व्यरचयत् साम्बं शिवं संस्मरन् ॥ ९५ ॥

इति श्रीपशुपति-कवि-विरचिते नेपालसाम्राज्योदये महाकाव्ये
पञ्चदशः सर्गः ॥

१. १९०९ शक वर्षे ।

# कानि चिन्नेपालभारतसम्बन्धीनि पद्यानि दीयन्ते

यस्मिन् देशे निमिकुलभवाः प्राभवंस्तत्त्वविज्ञाः
विद्यारण्ये मृगपतिसमा यत्र धीराश्चरन्ति ।
गोविप्रत्राः सुकृतिमतयः क्षत्रिया यत्र भूपाः
सोऽयं देशो धरणितनया यत्र सम्भूय धन्या ॥
(१. १०८)

प्राक्कल्पतः साप्तपदीनमस्य नितान्तहृद्यं सह भारतेन ।
यदावयोः संस्कृतिलक्ष्यनीति-सद्भावनाः सन्ति समानभाजः ॥
(१५. १६)

सह स्थितत्वादितरानपेक्ष्य साहाय्यमस्यार्थिकमस्त्यजस्रम् ।
न कोऽपि लोके प्रतिवेशिदुःखं सोढुं हि शक्तः सुमनाः कदापि ॥
(१५. १७)

राज्येऽस्मदीये विधिवच्चिकित्सालयाय साहाय्यमदाददभ्रम् ।
विवेककृद् भारतसर्वकारो वर्धापनार्होऽस्ति तदर्थमेषः ॥
(१५. १९)

राज्यं सुशासति भवत्यखिला मनुष्याः
स्वस्था भवन्तु नच केचन धान्यहीनाः ।
गृह्णन्तु नो भृतिवहा वसु नीतिहीनं
सर्वे भवन्तु सुखिनः प्रगतिं च कुर्युः ॥
(१५. ७७)

* * *